THE

PRINCESS OF WALES

# SARASWATĪ BHAVANA TEXTS

*No. 42*

—o—

EDITED BY

GOPI NATH KAVIRAJ, M. A.



THE

# BHEDA SIDDHI



*Printed by Jai Krishna Das Gupta*

*Vidya Vilas Press, Benares City.*

1933

श्रीमद्विश्वनाथपञ्चाननभट्टाचार्यप्रणीता

# भेदसिद्धिः

वाराणसेयराजकीयसंस्कृतमहाविद्यालयन्यायशास्त्रा-
ध्यापकेन न्यायव्याकरणाचार्यसूर्यनारायणशर्म-
शुक्लेन स्वप्रणीतया भेदसिद्धिपरिष्काराख्य-
टिप्पण्या समलङ्कृत्य सम्पादिता ।

---

THE

# BHEDA SIDDHI

OF

VIS'VANĀTHA PANCHĀNANA BHAṬṬĀCHĀRYA

---

*Edited with notes etc.,*

BY

NYĀYA VYĀKARAṆĀCHĀRYA
PANDIT SŪRYA NARĀYANA S'UKLA,
Professor, Govt. Sanskrit College,
BENARES.

श्रीः

# भूमिका ।

सुविदितमेवेदं यद् निसर्गप्रतिकूलस्वभावं सर्वजनानुभवसिद्धं दुःखं जिहासवः सर्व एव प्राणिनः तद्धानोपायमन्विष्यन्तः 'ऋते ज्ञानान्न मुक्तिः' 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिभिः तत्त्वज्ञानमेव तदुपायमाकर्णयन्ति तथाच गौतमसूत्रम् तत्त्वज्ञानान्निःश्रेयसाधिगम इति ।

तत्र 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीति' इति श्रुत्या द्वैतात्मज्ञानं तत्त्वज्ञानमित्यभिप्रेत्य न्याययोगसांख्यमीमांसावैशेषिकदर्शनविदो द्वैतात्मवादमातिष्ठन्ते ।

'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुतिभिरद्वैताज्ञानं तत्त्वज्ञानमित्यभिप्रेत्य वैयाकरणविज्ञानवादिमाध्यमिक शैवशाक्तवेदान्तदर्शनविदश्च अद्वैतवादमातिष्ठन्ते ।

तत्र त्वेतावान् विशेषो यद्वैयाकरणाः शब्दाद्वयवादं विज्ञानविदो विज्ञानाद्वयवादं माध्यमिकाः शून्याद्वयवादं शैवाः शिवाद्वयवादं शाक्ताः शक्तयद्वयवादं वेदान्तिनो ब्रह्माद्वयवादमभिप्रयन्ति ।

तदिदं वादद्वयमपि श्रौतम् । तथा च—

'स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजनाः ।
तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकाशिताः ॥
तस्यार्थवादरूपाणि निश्रित्य स्वविकल्पजाः ।
एकत्विनां द्वैतिनां च प्रवादा बहुधामताः ॥'

इति वाक्यपदीयकाराः—

'श्रुतेः श्रुत्वाऽऽत्मानं तदनुसमनुक्रान्तवपुषो
विनिश्चित्य न्यायादथ विहितहेयव्यतिकरम् ।

उपासीत श्रुत्वा शमदमविरामैकविभवो
भवोच्छित्त्यै चित्तप्रणिधिविहितैर्योगविधिभिः ॥

उपास्यमाने तस्मिन् प्रथमं बहिरर्थ एव भासते यमाश्रित्य धर्म-मीमांसोपसंहारः चार्वाकसमुत्थानं च तत्प्रतिपादनार्थं 'पराञ्चि खानी'त्यादि तद्धानार्थं 'परं कर्मभ्य' इत्यादि,

अथार्थाकारः यमाश्रित्य त्रैदण्डिकमतोपसंहारः योगाचा-रसमुत्थानं च तत्प्रतिपादनार्थम् 'आत्मैवेदं सर्वमि'त्यादि, तद्धा-नार्थम् 'अगन्धमरसमि'त्यादि,

अथार्थाभावः यमाश्रित्य वेदान्तद्वारमात्रोपसंहारः शून्यत्वनैरा-त्म्यसमुत्थानं च तत्प्रतिपादनार्थम् 'असदेवेदमग्र आसीदि'त्यादि, त-द्धानाय 'अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः' इत्यादि,

ततो विवेकः यमाश्रित्य सांख्यमतोपसंहारः शक्तिसत्त्वसमुत्थानं च तत्प्रतिपादनार्थं च 'प्रकृतेः परस्तादि'त्यादि, तद्धानाय 'नान्यत्स-दि'त्यादि,

ततः केवल आत्मा प्रकाशते यमाश्रित्याद्वैतमतोपसंहारः तत्प्रतिपा दनार्थं 'न पश्यतीत्याहुरेकीभवती'त्यादि तद्धानार्थं 'नाद्वैतं ना-पि च द्वैतमि'त्यादि,

ततः समस्तसंस्काराभिभवात् केवलोऽपि न विकल्प्यते यमाश्रि-त्य चरमवेदान्तोपसंहारः तत्प्रतिपादनार्थं 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'त्यादि, सा चावस्था न हेया मोक्षनगरगोपुरायमाणत्वा-त्, निर्वाणं तु तस्याः स्वयमेव यदाश्रित्य न्यायदर्शनोपसंहारः त-त्प्रातिपादनार्थम्–'अथ यो निष्काम आत्मकम आप्तकामः स ब्रह्मैव-सन् ब्रह्माप्येति न तस्य प्राणा उत्क्रामन्ति तत्रैव समवलीयन्ते' इत्यादि, तस्मादभ्यासकामोऽप्यपद्वाराणि विहाय पुरद्वारं प्रविशेत् यतो मार्गविमार्गसंमार्गसंमोहमाशङ्कमानैरुच्यते लक्ष्येण धनुषा योग इति, इति च–

न्यायाचार्या उदयनाचार्या आहुः ।

दार्शनिकवादद्वयमिवागमिकमपि वादद्वयं श्रौतम्—तत्र अभिनवगुप्तवसुगुप्तक्षेमराजप्रभृतयोऽद्वैतवादम्, रामकण्ठभोजदेवश्रीकराचार्य रामानुजमध्वनिम्बार्कवल्लभाचार्यप्रभृतयश्च द्वैतवादमातिष्ठन्ते। यद्यपि रामानुजाचार्यो विशिष्टाद्वैतवादं निम्बार्काचार्यो भेदाभेदवादं वल्लभाचार्यश्च शुद्धाद्वैतवादं स्वीकुर्वन्ति तथापि सर्वे एते जीवेश्वरयोर्भेदमङ्गीकुर्वन्तो द्वैतिन एवेति मन्तव्यम्।

तत्र ब्रह्माद्वयवादः ब्रह्मदत्तभर्तृप्रपञ्चादिभिराचार्यैरुररीकृतस्तदपेक्षया किञ्चिद्वैलक्षण्येन श्रीगौडपादाचार्यैः प्रदर्शितः श्रीभगवत्पादशङ्कराचार्यैः प्रख्यातिं प्रापित इति अद्वैतविद्याचर्याः श्रीमच्छङ्करभगवत्पादा इति लोके प्रसिद्धिः। वस्तुतस्तु जगत्प्रसिद्धस्यैवाद्वैतवादस्य ते प्रख्यापकाः। तथा च माधवीयशङ्करदिग्विजये मण्डनमिश्रं प्रति श्रीमच्छङ्कराचार्यवाक्यम्—

जगति संप्रथितं प्रथयाम्यहं समभिभूय समस्तविवादिनम्।
त्वमपि संश्रय मे मतमुत्तमं विवद वा गद वा विजितस्त्ववति॥

इति।

तत्र श्रीशङ्कराचार्यात्प्राक् आस्तिकदर्शनानुयायिभिः द्वैतिभिरद्वैतिभिश्च सिद्धान्तविरोधप्रयुक्तस्य खण्डनमण्डनादेः स्वस्वग्रन्थे करणेऽपि परस्परं तेषां न तादृशो विद्वेष आसीद्यादृशो नास्तिकदर्शनानुयायिभिः सहासीत्। वेदपथानुगामिनां द्वैतिनां वेदान्तिनां च परस्परं प्रेमैवासीदिति—

'दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन'

इति कुमारिलभट्टोक्तिरेवानुमापयति। युक्तं चैतदास्तिकदर्शनानुयायिनां वयं पञ्चोत्तरं शतमिति न्यायानुसरणम्। श्रीशङ्कराचार्यप्रभृतिभिर्बौद्धेषु दूरमुत्सारितेषु आस्तिकदर्शनानुयायिनामपि परस्परं खण्डनमण्डनादिकं स्वातन्त्र्येण प्रवृत्तमिति विदुषां विनोदाय समकालिकानां केषां चिद् द्वैतिनामद्वैतिनां च नामानि निर्दिश्यन्ते।

## द्वैतिनस्तत्परकालिका अद्वैतवेदान्तिनश्च ।

| द्वैतिनः | वेदान्तिनः |
| --- | --- |
| कणादः<br>गोतमश्च | कृष्णद्वैपायनः ( व्यासः ) |
| वात्स्यायनः<br>प्रशस्तपादाचार्यः<br>उद्योतकराचार्यश्च | गौडपादाचार्यस्तच्छिष्यो गोविन्दाचार्यः, तच्छिष्यः श्रीशङ्कराचार्यः, तच्छिष्याः-पद्मपादाचार्य सुरेश्वराचार्य हस्तामलकाचार्य त्रोटकाचार्याः । |
| भास्कराचार्यः ।<br>शिवादित्यः ।<br>जयन्तभट्टश्च । | सर्वज्ञात्ममुनिः, अविमुक्तात्मभगवान् , वोधधनाचार्यः, प्रकाशात्मयतिश्च । |
| उदयनाचार्यः<br>श्रीधराचार्यः<br>वल्लभाचार्यः<br>पार्थसारथिमिश्रः<br>यामुनाचार्यः<br>यादवप्रकाशः<br>रामानुजाचार्यः<br>श्रीकण्ठाचार्यः<br>श्रीकराचार्यः<br>निम्बार्काचार्यश्च । | श्रीहर्षमिश्रः खण्डनखाद्यकारः, श्रीकृष्णमिश्रयतिः, चिद्विलासः ( अद्वैतानन्दः ) |
| गङ्गेशोपाध्यायः,तत्पुत्रः-वर्धमानोपाध्यायः । | आनन्दवोधेन्द्रभट्टारकः<br>आनन्दपूर्णविद्यासागरः<br>ज्ञानोत्तमाचार्यश्च । |

| | |
|---|---|
| मध्वाचार्यः<br>त्रिविक्रमाचार्यः<br>पद्मनाभाचार्यः | चित्सुखाचार्यः, शङ्करानन्दः (विद्याशङ्करः)<br>श्रीधरस्वामी, प्रत्यक्स्वरूभगवान्,<br>अमलानन्दयतिश्च । |
| अक्षोभ्यमुनिः<br>वेदान्तमहादेशिकः<br>सुदर्शनाचार्यः | भारतीतीर्थः, विद्यारण्यस्वामी,<br>सायणाचार्यः । |
| जयतीर्थाचार्यः ।<br>रङ्गरामानुजाचार्यः<br>अनन्ताचार्यश्च | अनुभूतिस्वरूपाचार्यः,<br>नरेन्द्रगिरिप्रकाशानन्दसरस्वती । |
| शङ्कर मिश्रः<br>पक्षधर मिश्रः<br>रघुनाथ शिरोमणिः<br>वाचस्पति मिश्रः ।<br>वल्लभाचार्यः | मल्लनाराध्याचार्यः, नृसिंहाश्रमः<br>नारायणाश्रमः, रङ्गराजाध्वरी,<br>अप्पयदीक्षितः, सदानन्दयोगीन्द्रः,<br>रामतीर्थ स्वामी, भट्टोजिदीक्षितः<br>रङ्गोजिभट्टश्च । |
| व्यासराजाचार्यः<br>व्यासराम स्वामी<br>श्रीनिवास तीर्थः | मधुसूदनसरस्वती,<br>वलभद्रः मधुसूदनसरस्वती-<br>स्वामिनां शिष्यः, वेङ्कटनाथः,<br>धर्मराजाध्वरीन्द्रः । |

एषु केषां चित्समयनिर्णयः सप्रमाणमुद्ध्रियते ।

भगवान् श्रीशङ्कराचार्यः—

कलियुगस्य एकोननवत्यधिकाष्टशताधिकत्रिसहस्रमिते (३८८९) वर्षे बभूवेति—

निधिनागेभवह्नयब्दे विभवे मासि माधवे ।
शुक्ले तिथौ दशम्यां तु शङ्करार्योदयः स्मृतः ॥

इत्यभियुक्तोक्त्या

प्रासूत तिष्यशरदामभियातवत्या-
मेकादशाधिकशतोनचतुः सहस्रयाम् ॥

इति शङ्करमन्दारसौरभपद्येन च

अवगम्यते । साम्प्रतं च कलिगताब्दाः ( ५०३४ ) चतुस्त्रिंशदधिकपञ्चसहस्रमिताः वर्तन्ते । तेन च इतः पूर्वं पञ्चचत्त्वारिंशदधिकद्वादशशतमिते ( १२४५ ) वर्षे भगवान् श्रीशङ्कराचार्यो बभूवेति निश्चितम् ।

## न्यायमञ्जरीकारः श्रीजयन्तभट्टः—

चन्द्रपण्डितस्य पुत्रः, भामतीकारात् पूर्वकालभावीति संभाव्यते। अस्य कादम्बरीकथासारकर्ता अभिनन्दः पुत्रः कल्याणस्वामी पितामहः शक्तिस्वामी प्रपितामह आसीत् ।

## आचार्यवाचस्पतिमिश्रः—

न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे ॥

इति न्यायसूचीनिबन्धस्थपद्यात् ( ८९८ ) संवत्सरे आसीत् । अनेन च सांख्यतत्त्वकौमुदी, भामती, न्यायकणिका, तत्त्वसमीक्षा, तत्त्वबिन्दुः, योगभाष्यतत्त्ववैशारदी, न्यायवार्तिकतात्पर्यटीका, चेति ग्रन्था निर्मिताः । तात्पर्यटीकायाम्–'अस्माभिः–'त्रिलोनगुरून्नीतमार्गानुगमनोन्मुखैः" इत्युक्तत्वात्त्रिलोचनोऽस्य गुरुस्त्रिलोचनमतं च रत्नकीर्तिनाऽपोहसिद्धौ खण्डितम् ।

अज्ञानतिमिरशमनीं परदमनीं न्यायमञ्जरीं रुचिराम् ।
प्रसवित्रे प्रभवित्रे विद्यातरवे नमोगुरवे ॥

इति न्यायकणिकास्थारम्भश्लोकाद् वाचस्पतिमिश्रगुरुणा न्यायमञ्जरी निर्मितेत्यवगम्यते ।

## न्यायाचार्यः श्रीमानुदयनाचार्यः—

तर्काम्बराङ्कप्रमितेष्वतीतेषु ( ६०६ ) शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥

इति लक्षणवलीस्थात्पद्यात् (६०६) शके आसीदित्यवगम्यते अनेन च–न्यायकुसुमाञ्जलिः, आत्मतत्त्वविवेकः, तात्पर्यपरिशुद्धिः, किरणावलीः लक्षणावली चेतिग्रन्थाः प्रणीताः ।

## कन्दलीकारः श्रीधराचार्यः—

त्र्यधिकदशोत्तरनवशतशाकाब्दे ६१३ न्यायकन्दली रचिता ।
श्रीपाण्डुदासयाचित भट्टश्रीश्रीधरेणेयम् ॥

इति पद्यात् (६१३) शकाब्दे आसीत् । उदयनाचार्यश्रीधराचार्ययोः समकालिकत्वादेव द्वयोर्ग्रन्थेषु परस्परं खण्डमण्डनादिकमुपलभ्यते । श्रीधराचार्येण च न्यायकन्दली, अद्वयसिद्धिः, तत्वप्रबोधः, तत्त्वसम्वादिनी, संग्रहटीका, चेति ग्रन्थाः निर्मिताः ।

## भट्टवादीन्द्रः ।

अयमेव महाविद्याविडम्बनकारस्तार्किकः १४१० विक्रमवत्सरे बभूव ।

## श्रीशङ्करमिश्रः ।

अयं १४७० विक्रमवत्सरे बभूव । यतस्तत्कृतः भेदप्रकाशः (भेदरत्नं) १५१६ वि० लिखितो जम्बूनगरे १५२६ विक्रमवर्षलिखिता शाङ्करी च सरस्वतीभवने वर्तते । तदानीमेव पक्षधरमिश्रः खण्डनोद्धारकर्ता वाचस्पतिमिश्रो रघुनाथशिरोमणिश्चासन्निति विदुषां मतम् ।

## मल्लनाराध्याचार्यः ।

अनेन कोटीशवंशोद्भूतेन भेदरत्नस्य खण्डनं अभेदरत्न ( अद्वैतरत्न) नाम्ना निबन्धेन कृतम् ।

अद्वैतरत्ने च—

श्रीविरूपाक्षमाराध्य पितॄन् विद्यागुरूंस्तथा ।
करोम्यद्वैतरत्नस्य रक्षां कुद्वैतिचोद्यतः ॥

इति लिखितम् ।

अस्यैवाद्वैतरत्नस्योपरि नृसिंहाश्रमकृता तत्त्वदीपनटीका वर्तते ।

## नृसिंहाश्रमः ।

अयं १६०४ विक्रमवत्सरे असीत् अनेन च भेदधिक्कारः, अद्वैतदीपिका, तत्त्वविवेकः, तत्त्वदीपनं, नृसिंहविज्ञापनं, चेत्यादयो बहवो निबन्धा लिखिताः । तत्र भेदधिक्कारस्य टीका भेदधिक्कारसत्क्रिया नारायणाश्रमविरचिता, भेदधिक्कारसत्क्रियोज्ज्वला शुद्धानन्दस्वामिशिष्यविरचिता, भेदधिक्कारविवरणं च वर्तते ।

## रङ्गराजाध्वरी अप्पयदीक्षितश्च ।

नृसिंहाश्रमस्य शिष्यो रङ्गराजाध्वरिरप्पयदीक्षितस्य पिता अनेन विद्यामुकुरनामा ग्रन्थो विरचितः ।

अप्पयदीक्षितेन च अद्वैतविलासनामा ग्रन्थो रचितः एतस्य १५७७ वैक्रमवत्सरः जन्मसमयः १६४९ वै० निर्वाणसमयः ।

## मधुसूदनसरस्वती ।

मधुसूदन सरस्वती स्वामिना सर्वतन्त्रस्वतन्त्राप्पय्यदीक्षित इति अद्वैतसिद्धौ लिखितम् ततः अप्पयदीक्षितपरकालवर्ती इति १६२० विक्रमवत्सरः स्थितिसमयः मधूसूदनसरस्वतीस्वामिनामिति निश्चितम् ।

## श्रीवेणीदत्तः ।

अयं माध्वसम्प्रदानुयायी महीधरसूनुः १६३० विक्रमवत्सरे आसीत् । यतः महीधरकृतो मन्त्रमहोदधिः वै० १६१३ लिखितः सरस्वतीभवने वर्तते । अनेन भेदजयश्रीनामा ग्रन्थो विरचितः ।

## भेदपक्षीया निबन्धाः—

(१) अभेदखण्डनम्, (२) भेददर्पणः, (३) महादेवमिश्रकृता भेददीपिका, (४) रामानुजसंप्रदायीयनरसिंहदेवकृतं भेदधिक्कारन्यक्कारनिरूपणम्, (५) भेदप्राकारः, (६) शङ्करमिश्रकृतो भेदप्रकाशः (भेदरत्नं), (७) भेदवादी, (८) वेणीदत्तकृता भेदजयश्रीः, (९) भेदोक्तिजीवनम्, (११) व्यासतीर्थयतिकृतं भेदोज्जीवनम्, (१२) वंशीदासकृतो भेदाभेदवादः, (१३) भेददर्शी, (१४) अभेदमिथ्यात्वनिरूपणम्, (१५) विश्वनाथपञ्चाननभट्टाचार्यकृता भेदसिद्धिः, (१६) श्रीराखालदासन्यायरत्नकृतमद्वैतवादखण्डनं, (१७) श्रीपञ्चाननभट्टाचार्यकृता द्वैतोक्तिरत्नमाला चेत्यादयः ।

## अभेदपक्षीया निबन्धाः—

(१) भेदखण्डनम्, (२) अभिनवगुप्तपादाचार्योद्धृता भेदविदारिणी, (३) भेदधिक्कारः, (४) भेदधिक्कारन्यक्कारहुङ्कृतिः, (५) भेदधिक्कृतितत्त्वविवेचनम्, (६) अभेदकारिका, (७) अद्वैतरत्नरक्षणम्, (८) मल्लनाराध्याचार्यकृतमभेदरत्नम्, (९) नृसिंहाश्रमकृताऽद्वैतदीपिका, (१०) रङ्गराजाध्वरिकृतः—अद्वैतविद्यामुकुरः, (११) अप्पयदीक्षितकृतोऽद्वैतविलासः, (१२) रङ्गोजी भट्टकृतोऽद्वैतचिन्तामणिः, (१३) भट्टोजिदीक्षितकृतोऽद्वैतकौस्तुभः, (१४) अद्वैतशास्त्रसारोद्धारश्चेत्यादयः ।

एतेन सुस्पष्टमिदमवगतं भवति यद् द्वैतिनामद्वैतिनां च प्रवादुकानां स्वस्वपक्षे कियानभिनिवेश इति । वस्तुतस्तु—द्वैतमद्वैतं चेति प्रवादुकानां प्रवादमात्रं परमार्थतस्तु न द्वैतं नाप्यद्वैतम्, 'न द्वैतं नापि च द्वैतम्' इति श्रुतेः ।

एतदेवाभिप्रेत्योदयनाचार्यैरुक्तं 'तद्ध्यानार्थं न द्वैतं नापि च द्वैतमि-त्यादि, ततःसमस्तसंस्कारानभिभवात् केवलोऽपि न विकल्प्यते यमा-

श्रित्य चरमवेदान्तोपसंहारः, तत्प्रतिपादनार्थं 'यतो वाचा निवर्तन्ते-ऽप्राप्य मनसा सह' इत्यादि सा चावस्था न हेया मोक्षनगरगोपुरायमाणत्वात् निर्वाणं तस्याः स्वयमेव यदाश्रित्य न्यायदर्शनोपसंहार' इति। एवं चास्मिन्नेव दर्शने आस्तिकनास्तिकादिदर्शनानामुपसंहारात् न्यायदर्शनमेव सर्वदर्शनमूर्धन्यं दर्शनान्तराणि तु तत्रैव पूर्वपूर्व भूमिकारूपतयोपयुज्यन्त इति ।

## तार्किकाभिमतापवर्गस्वरूपम् ।

तत्र तावद्धर्मार्थकामापवर्गाख्येषु चतुर्विधपुरुषार्थेषु अपवर्ग ( मोक्ष ) एव परमः पुरुषार्थः, स च 'तदत्यन्तविमोक्षोऽपवर्ग' इति सूत्रलक्षित आत्यन्तिकदुःखनिवृत्तिरूपः । तथा च 'दुःखेन जन्मनात्यन्तं विमुक्तिरपवर्ग' इति भाष्यम् । दुःखेन दुःखानुषङ्गिणेत्यर्थः—'शरीरादिना दुःखान्तेनात्यन्तिको वियोग' इति वार्तिकात्, तदित्यनन्तरं गौणमुख्यभेदेन भिन्नं दुःखं परामृशतीत्याह भाष्यकारः तेनं दुखेनेति, मुख्यमेव दुःखमिति भ्रमो माभूदत आह जन्मनेति, अनेन जायमाना दुःखशब्देन सर्वे शरीरादय उच्यन्ते इत्युक्तं भवति' इति तात्पर्याच्च ।

गौणमुख्यभेदभिन्नानि दुःखानि च-शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेत्येकविंशतिः । दुःखत्वजातिशून्ये शरीरादौ दुःखसंबन्धितया गौणं दुःखत्वम् । स्वर्गादिसुखस्यापि तन्नाशज्ञानेन दुःखसंबन्धित्वेन दुःखत्वमेव । आत्यन्तिकी दुःखनिवृत्तिश्च बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां नवानामात्मविशेषगुणानामुच्छेदादेवेति आत्मविशेषगुणोच्छेदोऽपि अपवर्ग इत्युच्यते । तथा चाहुर्न्यायमञ्जरीकाराः—

> यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः ।
> तावदात्यन्तिकी दुःखव्यावृत्तिर्नावकल्पते ॥
> धर्माधर्मनिमित्तो हि संभवः सुखदुःखयोः ।

मूलभूतौ च तावेव स्तम्भौ संसारसद्मनः ॥
तदुच्छेदे तु तत्कार्यशरीराद्युपलम्भनात् ।
नात्मनः सुखदुःखे स्त इत्यसौ मुक्त उच्यते ॥
प्राणस्य क्षुत्पिपासे द्वे लोभमोहौ च चेतसः ।
शीतातपौ शरीरस्य षडूर्मिरहितः शिवः ॥
ननु तस्यामवस्थायां कीदृगात्मावशिष्यते ।
स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः ॥
ऊर्मिषट्कातिगं रूपं तदस्याहुर्मनीषिणः ।
संसारबन्धनाधीनदुःखक्लेशाद्यदूषितम् ॥

इति ।

इत्यादि लक्षणमवादि तदेतदिच्छा-
द्वेषप्रयत्नसुखदुःखसमाश्रयत्वम् ॥
तत्सङ्गिनं तदिह हेयतया व्यवस्ये-
त्तद्विप्रयुक्तमधिगम्यतया मुमुक्षुः ॥

इति च ।

एतदेवापर्गलक्षणम्—'अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः' इति श्रुतिरप्याह ।

न च 'मुक्तः सुखी भवति' इति श्रुत्या मोक्षे नित्यसुखस्याऽवगमात् कथं सुखनिवृत्तिरपवर्ग उच्यते इति वाच्यम् ,तत्र दुःखापाय एव सुखशब्दस्य प्रयोगात्--

चिरज्वरशिरोत्यादिव्याधिदुःखेन पीडिताः ।
सुखिनो तदपाये हि तदपाये प्रयुञ्जते ॥ इति ॥

तदुक्तं वार्तिककृता 'आत्यन्तिकी सुखाभिव्यक्तिरित्येके तन्न प्रमाणासंभवात् विमुक्तस्यात्मनो नित्यं सुखमिति न प्रमाणमस्ति आगमः प्रमाणमिति चेदिदमेव विचार्यताम् किमयं नित्येन सुखेन योगमाह उत दुःखेनात्यन्तिकवियोगमाहेति दृष्टश्च दुःखाभावेऽपि सुखशब्दप्रयोगः दुःखापगमे सुखी संवृत्त इत्यादौ, यदि पुनरयं संब-

त्राणको मोक्षे नित्यंसुखमिति रागेण प्रवर्तते न मुच्येत कस्मात् रागस्य बन्धनसमाज्ञानात्' इति ।

विमुक्तिश्चात्मन एव न चित्तस्य 'कस्य तर्ह्यपवर्गः ? योऽपवृज्यते कोऽपवृज्यते ? आत्मा अथ काऽपवृक्तिः ? दुःखादिभिर्वियोग इति' वार्तिकात् ।

दुःखनिवृत्तावात्यन्तिकत्वं च स्वसमानाधिकरणदुःखासमानकालीनत्वम् । एवं च स्वसमानाधिकरणदुःखप्रागभावासहवृत्ति दुःखध्वंसः स्वसमानाधिकरणदुःखासमानकालीनदुःखध्वंसो वाऽपवर्ग इति सिद्धम् ।

के चित्तु 'दुःखेनात्यन्तं विमुक्तश्चरती'तिश्रुत्या दुःखात्यन्ताभावोऽपवर्ग इतिवदन्ति ।

अन्ये तु दुःखप्रागभावासहवृत्तिदुःखसाधनध्वंसोऽपवर्ग इति वदन्ति ।

एतादृशापवर्गस्वरूपे 'अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः' 'दुःखेनात्यन्तं विमुक्तश्चरति' 'न स पुनरावर्तते' इत्यादि श्रुतयः प्रमाणम् । आवर्तते शरीरी भवति ।

## अपवर्गसाधननिरूपणम् ।

अपवर्गोपायश्च 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' 'तत्त्वज्ञानान्निःश्रेयसाधिगमः' 'ऋते ज्ञानान्न मुक्तिः'इति सूत्रश्रुत्यादिप्रतिपादिततत्त्वज्ञानमेव । तत्त्वज्ञानान्मिथ्याज्ञानापाये तत्कार्यदोषापायः दोषापाये प्रवृत्त्यपायः प्रवृत्त्यपाये जन्मापायः जन्मापाये दुःखापायः स एवापवर्ग इति सूत्रार्थः ।

## तत्त्वज्ञानस्वरूपनिरूपणम् ।

ननु तत्त्वज्ञानान्मिथ्याज्ञाननिवृत्तिरित्युक्तं तत्र कस्य तत्त्वज्ञानादिति चेदत्र वार्तिककृतः 'क एवं सूत्रार्थं वर्णयति प्रमाणादिपदार्थत-

त्त्वज्ञानान्निःश्रेयसमिति अपि तु यत्परिज्ञानान्निःश्रेयसं तदुत्तरसूत्रे वक्ष्यामः, उक्तश्चात्मादेः प्रमेयस्य तत्त्वज्ञानान्निश्रेयसाधिगम इति' । आत्मादयश्च 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमि'ति सूत्रोक्ता वेदितव्याः ।

अत्र तात्पर्यटीकाकृतः 'न सूत्रार्थापरिज्ञानात् नायं सूत्रार्थः सर्वेषां तत्त्वज्ञानं साक्षान्निःश्रेयसोपयोगि किंत्वात्मादितत्त्वज्ञानं तदितरेषां पारम्पर्येणेति, चतस्रो हि प्रतिपत्तयः प्रमेये आत्मादौ, प्रथमा श्रवणम् , द्वितीया श्रुतस्य परीक्षा यामाहुर्मननमिति सा चान्वीक्षिक्यामायतते, तत्त्वसाक्षात्कारस्तु विपर्ययसाक्षात्कारं निवर्तयति तज्जनिता च वासनाविपर्ययवासनामिति तत्त्वसाक्षात्कारमर्थयमानेन आदरनैरन्तर्याभ्यां ध्यानचिन्तादिशब्दवाच्या तृतीया साक्षात्कारफला दीर्घकालमुपासनीया, अथपरिनिष्पन्नसाधनोपायः साक्षात्कारवर्ती प्रतिपद्य चतुर्थीं प्रतीतिं निर्मुक्तसकलक्लेशजालोऽप्रवर्तमानो धर्माधर्मसाधनेषु निरुद्धानागतधर्माधर्मप्रबन्धोत्पादो भूतेन्द्रियजयी प्रज्ञाज्योतिर्जीवन्मुक्त इत्युच्यते न चैवमवस्थो वीतरागोऽपि सहसैव देहादिभिर्वियुज्यते नाभुक्तं क्षीयते कर्मेतिश्रुत्या अन्त्यसुखदुःखसंविज्ञानविरोधस्य,कर्मणामवधारणात्' इति ।

मिथ्याज्ञानं च—'मिथ्याज्ञानमनेकप्रकारकं वर्तते' को वृत्त्यर्थो ? विषयार्थः, तत्रायं भेदः तत्रात्मनि तावन्नास्तीति, आत्मा तावदस्तित्वेन प्रमाणसामर्थ्यादधिगतः, अस्तित्वेनाधिगते नास्तीति विज्ञानं मिथ्याप्रत्ययः, एवमनात्मनि शरीरे आत्मेति' वार्तिके निरूपितम् ।

योगसूत्रेऽपि 'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या' इत्युक्तम् ।

मिथ्याज्ञाननिवृत्त्यर्थमेव 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रुतिर्मननादिकं विदधाति । एवंच शरीरादिभिन्नत्वेनात्मज्ञानं मिथ्याज्ञाननिवर्तकमिति सिद्धम् । एतदेव

'उपदेशमात्राच्छरीरभिन्नात्मावगमेऽप्यन्यपरत्वशङ्कया शङ्कासूकस्य नाश्रद्धामलक्षालनमिति मननमावश्यकम् तथा च मन्तव्यश्चोपपत्तिभिरिति श्रुतिरेवोपपत्तिबोधकस्य शास्त्रस्यापवर्गहेतुत्वं बोधयति मननस्य तदेकसाध्यत्वात् ।

एवं च शमदमब्रह्मचर्याद्युपबृंहितयावन्नित्यनैमित्तिकसंध्योपासनादिकर्मसहितात्तत्त्वज्ञानान्मुक्तिरिति चिन्तामणौ समर्थितम् । एवं च तत्त्वज्ञानस्य मिथ्याज्ञाननिवृत्तिद्वारा परम्परयाऽपवर्गप्रयोजकत्वम् तत्त्वज्ञानवतां दुःखात्यन्तविमुक्तिबोधकानि श्रुतिवाक्यान्यपि परम्परया मुक्तिप्रयोजकत्वपराण्येवेति मन्तव्यम् ।

## उदयनाचार्यभिमतापवर्गहेतुनिरूपणम् ।

केचित्तु 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' इत्यनेन ईश्वरमुपक्रम्य 'तमेव विदित्वाऽतिमृत्युमेति' ज्ञात्वा देवं मुच्यते सर्वपाशैः' 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इत्यादिभिरीश्वरसाक्षात्कारस्य मोक्षहेतुत्वावगात् 'आत्मा वाऽरे द्रष्टव्य' इतिश्रुतौ तदेकवाक्यतयाऽऽत्मपदस्य ईश्वरपरत्वेन ईश्वरसाक्षात्कारस्यैव मोक्षहेतुत्वम् ईश्वरज्ञानस्य विपरीतज्ञानविधया न स्वात्मविषयकमिथ्याज्ञाननिवर्तकत्वं किन्तु वासनारूपदोषविनाशकतयैवेति तत्त्वम् ।

यथाहुरुदयनाचार्याः—

स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥
न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥

इति स्वर्गयोः-उत्कटरागगोचरयोः । अपवर्गयोः-अपरपरमुक्त्योः ।

## दीधितकाराभिमतापवर्गहेतुनिरूपणम् ।

दीधितिकारास्तु—'न वाऽरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति' 'सर्वेषामेव भूतानां नृप ? स्वात्मैव वल्लभः' इत्यादिश्रुतिस्मृतिभिः स्वात्मन एवोपक्रान्ततया 'आत्मा वाऽरे' इति श्रुतौ स्वात्मनःश्रवणादेरेव मोक्षहेतुत्वाभिधानात् स्वात्मसाक्षात्कारस्यैव मोक्षहेतुत्वम् ईश्वरसाक्षात्कारस्य तु जीवब्रह्माभेदरूपयोगाभ्यासस्य स्वात्मसाक्षात्कारद्वारा मुक्त्युपयोगित्वमेव 'तमेव विदित्वा इति श्रुतौ एवपदं तु विदित्वेत्यत्र योजनया न क्षतिकरमिति वदन्ति ।

वस्तुतस्तु आत्मा वाऽरे इति श्रुत्या स्वात्मसाक्षात्कारस्य, तमेव विदित्वेति श्रुत्येश्वरसाक्षात्कारस्य च मोक्षहेतुत्वम् द्वे ब्रह्मणी वेदितव्ये परा चैवापरा च 'द्वासुपर्णा सयुजा' इतिश्रुतेरिति । तथा च वर्धमानोपाध्यायाः—'ईश्वरमननं च यद्यपि मिथ्याज्ञानोन्मूलनद्वारा नोपयोगि तथापि स्वात्मसाक्षात्कारे एवोपयुज्यते यदाहुः 'स हि तत्त्वतो ज्ञातः स्वात्मसाक्षात्कारस्योपकरोति' इति ।

आत्मतत्त्वविवेकेऽपि 'न ततोऽन्यः प्रतियोग्यनुयोगितया आत्मैव तत्त्वतो ज्ञेय' इत्युक्तम् ईश्वरभिन्नत्वेनात्मज्ञानस्येव आत्मभिन्नत्वेनेश्वरज्ञानस्यापि मोक्षहेतुत्वमिति तदर्थः । एतदेव—

जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमितिवीतशोकः ।
पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्तेनामृतत्वमेति ॥

इति श्रुतिरपि वदति ।

ननु काशीमरणात् पुरुषोत्तममुखदर्शनादिभ्यश्च मोक्षप्राप्तिश्रवणात् कथं 'नान्यः पन्थाः' इति श्रुतेः सामञ्जस्यमिति चेन्न काशीमरणादिस्थलेऽपि आत्मतत्त्वज्ञानस्यैव मोक्षहेतुत्वम् काशीमरणादेश्च तत्त्वज्ञानद्वारा मोक्षोपायत्वमिति काशीमरणादित्यत्र पञ्चम्या प्रयोजकत्वार्थकतया दोषाभावात् ।

यद्यपि 'ब्रह्मैवाहं न संसारी' 'तत्त्वमसि' अहं ब्रह्मास्मि' इत्यादिश्रुत्या ब्रह्माभिन्नजीवात्मविषयकाभेदज्ञानस्यापि मोक्षहेतुत्वं प्रतिपाद्यते तथापि जीवब्रह्माऽभेदचिन्तनरूपयोगस्य अभ्यासेन मोक्षकारणीभूतेश्वरसाक्षात्कारे उपयोगितया मोक्षहेतुत्वकथनमिति बोध्यम् ।

एवं 'सर्वं यदयमात्मा' 'एतदात्म्यमिदं सर्वम्' 'आत्मैवेदं सर्वम्' 'नेह नानास्ति किंचन' इति भावनापि रागद्वेषादिनिवृत्तिद्वारा मिथ्याभूतापि श्रुतिसिद्धतया मोक्षहेतुरिति बोध्यम् ।

एवं च ईश्वरभिन्नत्वेन शरीरभिन्नत्वेन च जीवस्य जीवभिन्नत्वेन ईश्वरस्य, जीवभिन्नत्वेन शरीरस्य जीवानां च परस्परभिन्नत्वेन ज्ञानं, ब्रह्माभिन्नजीवभावना, काशीमरणादिकं च साक्षात्परम्परया वा मोक्षहेतुरिति तार्किकाः ।

## भेदसिद्धिनिर्माणप्रयोजनम् ।

वेदान्तिनस्तु 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योहमस्मीति स न वेदे'ति श्रुतिभिर्भेदस्य निन्दितत्वात् 'तत्र को मोहः कः शोक एकत्वमनुपश्यत' इत्यादिश्रुत्या जीवब्रह्मैक्यज्ञानस्य मोक्षहेतुतामामनन्तो भेदस्याप्रामणिकत्वं तज्ज्ञानस्य मोक्षाहेतुत्वं च प्रतिपादयन्ति ।

तदिदं वेदान्तिमतं दूषयितुं तार्किकमतं स्थापयितुं च तार्किकाणां मान्यतमेन श्रीशङ्करमिश्रेणाद्वैतवादखण्डनपरं भेदप्रकाश [ भेदरत्न ] नामकं निबन्धरत्नं निबद्धम् । तच्च मल्लनाराध्यचार्य श्रीनृसिंहाश्रममधुसूदनसरस्वतीप्रभृतिभिरद्वैतिभिः क्रमेण अभेदरत्नभेदधिक्काराद्वैतरत्नरक्षणनामकान्निबन्धान् निबध्य स्वोत्प्रेक्षिताभिर्युक्तिभिर्धूलिधूसरं कृत्वाऽरत्नतां नीतिमिति गोतमोद्योतकरप्रभृतिभिस्तार्किकैः प्रतिपादितं श्रीशङ्करमिश्रादिभिः परिरक्षितं द्वैतवादं निर्दिष्टनामभिरद्वैतिभिर्दूषितं दृष्ट्वा संजातसद्रत्नलोभेन तदुद्धर्तुकामेन श्री विश्वनाथपञ्चाननभट्टाचार्येण

भेदसिद्धिनिर्माणेन भेदधिक्कारादिनिर्दिष्टयुक्तिकलङ्कानपसार्य निष्कण्टको निर्मलश्च कृतो द्वैतवादस्य पन्थाः ।

सा चेयं भेदसिद्धिः भेदधिक्कारखण्डनपरापि नामप्रतिपक्षतया अद्वैतसिद्धिवत्परिच्छेदचतुष्टयात्मिका भवेदिति सम्भाव्यते परन्तु सांप्रतं प्रथमपरिच्छेदमात्रमुपलब्धा तावत्येव कुयुक्तिसंतमसापनोदनेन भेदवादस्य श्रौतत्वसंपादनायालमिति दार्शनिकानां मनोविनोदाय प्रकाश्यते ।

## भेदसिद्धिकर्तुः परिचयः ।

अस्या निर्माता विश्वविख्यातवैदुष्यो न्यायसिद्धान्तमुक्तावलीरचयिता—महामहोपाध्यायश्रीविश्वनाथपञ्चाननभट्टाचार्यश्च रत्नाकरविद्यावाचस्पतेः पौत्रः विद्यानिवासभट्टाचार्यस्य पुत्रः रुद्रन्यायवाचस्पतेः नारायणभट्टाचार्यस्य च भ्राता १५५६ शालिवाहनशके वङ्गदेशे प्रख्याततार्किको बभूव ।

रसवाणतिथौ शकेन्द्रकाले
बहुले कामतिथौ शुचौ सिताहे ।
अकरोन्मुनिसूत्रवृत्तिमेतां
ननु वृन्दाविपिने स विश्वनाथः ॥

इति महामहोपाध्यायविन्ध्येश्वरीप्रसादद्विवेदमहोदयानां पुस्तके वर्तमानात् पद्यादवगम्यते ।

एतस्यैव ज्येष्ठपितृव्यो वासुदेवसार्वभौमः आसीद्यस्य शिष्याः तत्त्वचिन्तामणिदीधितिकारो रघुनाथतार्किकशिरोमणिः, स्मृतितत्त्वस्य कर्ता महामहोपाध्यायरघुनन्दनभट्टाचार्यः, श्रीगौराङ्गमहाप्रभुः, तान्त्रिककृष्णानन्दश्च बभूवुः ।

श्री विश्वनाथ पञ्चानन भट्टाचार्य विरचिता ग्रन्थास्त्वेते(१) भाषापरिच्छेदः ( कारिकावली ) (२) न्यायसिद्धान्तमुक्तावली ( भा-

षापरिच्छेद टीका ) (३) मांसतत्त्वविवेकः (४) न्यायसूत्रवृत्तिः (५) सुबर्थतत्त्वालोकः (६) न्यायतन्त्रबोधिनी (७) पिङ्गलप्रकाशः (८) भेदसिद्धिश्च ।

## भेदसिद्धिविषयसंक्षेपः ।

अद्वैतरत्ने मधुसूदनसरस्वतीस्वामिना भेदज्ञानस्य मुक्तिहेतुत्वे प्रमाणं न पश्याम इति प्रतिज्ञाय 'तमेव विदित्वाऽतिमृत्युमेति' इत्यादीनि आत्मज्ञानस्य मुक्तिहेतुत्वप्रतिपादकानि वचनान्युपस्तानि ।

भेदसिद्धौ च 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीत शोकः । पृथगात्मानं प्रेरितारं च मत्त्वा जुष्टस्तेनामृतत्वमेति 'द्वे ब्राह्मणी वेदितव्ये परं चापरमेव च' 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति श्रुतिस्मृतिभिः भेदज्ञानस्य मोक्षहेतुत्वं श्रुतम् आत्मज्ञानस्य मोक्षहेतुत्वप्रतिपादकश्रुतीनां तु नास्मन्मते विरोधः तासां शरीरेश्वरादिभिन्नत्वप्रकारकात्मज्ञानपरत्वसंभवात् । एवम् 'अस्थूलमनणु' इतिश्रुतिरपि भेदज्ञानस्य मोक्षहेतुत्वे प्रमाणम् । न च तत्र नास्ति स्थूलं यत्रेति अत्यन्ताभावो भासते न भेद इति अद्वैतरत्नोक्तं युक्तमिति वाच्यम् 'अस्थूलं तत् स्थूलादन्यत् एवं तर्ह्यणु अनणु अस्तु तर्हि ह्रस्वम् अह्रस्वम् एवं तर्हि दीर्घं नापि दीर्घम् अदीर्घम्' इति शङ्करभाष्यविरोधापत्तेः ।

एतेन 'द्वे ब्रह्मणी वेदितव्ये' इति श्रुतौ भेदवाचकपदाभावेन भेदज्ञानस्य मोक्षहेतुत्वे नेयं श्रुतिः प्रमाणमिति अद्वैतरत्नोक्तम् परास्तम् पूर्वोक्तेषु 'जुष्टं यदा पश्यत्यन्यमीशम्' 'अस्थूलमि'त्यादिषु भेदवाचकपदस्य स्फुटतया श्रवणात् द्वित्वस्य भेदव्याप्ततया द्वे ब्रह्मणी इति श्रुतेरपि कथंचिद्भेदबोधकत्वसंभवात् ।

एवं च द्वा सुपर्णा इति श्रुतौ भेदवाचकपदसत्त्वेऽपि भेदज्ञानस्य मुक्तिहेतुत्वप्रतिपादकपदाभावः इति अद्वैरत्नोक्तिः पराकृता

पृथगात्मानं प्रेरितारं च मत्वा अमृतत्वमेतीत्यनेन स्फुटतया भेदज्ञानस्य मुक्तिहेतुत्वावगमात् ।

यदपि अप्राप्ते शास्त्रमर्थवदिति न्यायेन लोकसिद्धे भेदे न श्रुतीनां प्रामाण्यमिति कथनं तदपि प्रतारणामात्रं भेदस्य प्रत्यक्षादिगम्यत्वं नास्तीति त्वयैव प्रतिपादनात् अगृहीतग्राहित्वरूपप्रामाण्यस्य धारावाहिकस्थलेऽव्याप्तेः अध्यापकज्ञानेऽप्रमाण्यापत्तिभिया च स्वीकर्तुमयोग्यत्वाच्च ।

शरीरभेदज्ञानं न मुक्तिहेतुत्वेन श्रुतमिति कथनं तु न युक्तम् । अस्थूलमित्यादिश्रुत्या श्रवणात् ।

न च आपाततः श्रुतितो भेदस्य प्रतिपत्तावपि न वास्तविकत्वं मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति इति श्रुत्या भेदस्य निन्दितत्वादिति वाच्यम् 'एकाकी न रमते' 'एकाकी बिभेति' इत्यादिनाऽभेदस्यापि निन्दितत्वेन ऐक्येऽपि श्रुतेः प्रामाण्यायोगात् वस्तुतस्तु नानेव पश्यतीत्यादि श्रुतीनां पश्यति वेद विदित्वा इत्यादि पदघटितत्वेन भेदज्ञाननिन्दकत्वेऽपि भेदनिन्दकत्वासंभवः तासां भेद निन्दापरत्वेऽपि विभागलक्षणभेदनिन्दापरत्वस्यैवौचित्यम् 'अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि मामकम्' स्मृतेः । अभेदस्तुतिरपि तत्र तत्र क्रियमाणा अविभागस्तुतिपरैव । या च जीवब्रह्मणोरैक्यबोधिका श्रुतिः सा अभेदभावनापरा अभेदभावनस्य मोक्षहेतुत्वश्रवणात् अभेदज्ञानस्य भ्रमत्वेऽपि श्रुतिबलेन मोक्षजनकत्वसंभवात् प्रतिमादिषु विष्णवादिबुद्धिवत् । या च जगतो मिथ्यात्वस्य बोधकत्वेन भवदभिमता अतोऽन्यदार्तमिति श्रुतिः सा च न मिथ्यात्वस्य बोधिका आर्तिपदस्य नश्वरे दीने वा प्रयोगस्य लोकसिद्धत्वेऽपि मिथ्याभूते वस्तुन्यप्रयोगात् । कथं चिन्मिथ्यात्वबोधकत्वेऽपि आस्थानिवृत्त्यर्थत्वात् जीवानामभेदप्रतिपादनमपि रागद्वेषनिवृत्त्यर्थमेव रागद्वेषयोरेव सर्वानर्थबीजत्वात् ।

यद्यपि उपक्रमोपसंहारबलेन श्रुतेरद्वैते तात्पर्यमिति अद्वैतरत्नकृतां सगर्वमुत्प्लवनं तदपि अस्यां भेदसिद्धौ साटोपं खण्डयित्वा द्वैते एव श्रुतेरुपक्रमादितात्पर्यलिङ्गमिति प्रतिपादिततया नात्र पिष्टं पिष्यते इति विरम्यते लेखविस्तरात्।

## कृतज्ञताप्रकाशः।

इयं भेदसिद्धिः काशीस्थराजकीयसरस्वतीभवनपुस्तकालयसंगृहीते मन्त्रमहोदधिवाजसनेयिसंहिताभाष्यादिकर्तुर्महीधरस्य पुस्तकसंग्रहे प्रथमपरिच्छेदमात्रं लब्धा।

तामिमां श्रीमद्भिः प्राच्यप्रतीच्योभयदर्शननिष्णातैः वाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यक्षैः सुगृहीतनामधेयश्रीगोपीनाथकविराजमहोदयैराज्ञप्तः टिप्पण्या संभूष्य तदुपदर्शिताध्वना संपादितवानस्मीत्यतस्तेषां करकमलयोरिमां कृतिमर्पयन् तेषां चिरायुष्ट्वपुण्ययशोऽभिविवृद्धये श्रीविश्वेश्वरं प्रार्थयमानोऽनेकधन्यवादैस्तानर्चयामि।

भेदसिद्धेरेकमेव पुस्तकं प्रायः शुद्धमुपलभ्य संपादने प्रवृत्तस्य मे स्थलविशेषे साहाय्यमाचरतां श्रीगोयनकामहाविद्यालयाध्यक्षाणामस्मत्पितृकल्पानां सर्वतन्त्रस्वतन्त्राणां श्रीचण्डीप्रसादशुक्ल महोदयानां, अस्मन्मित्रप्रवराणां दर्शनाचार्य श्रीहरिनाथशर्मणां चोपकाराञ्छिरसोद्वहन् केवलं प्रणामैरेवात्मानं कृतार्थयामि।

सरस्वतीभवनादेतत्पुस्तकं निस्सार्य दत्तवद्भ्यो मयि परमं स्नेहमावहद्भ्यः साहित्याचार्य श्रीनारायणशास्त्रि खिस्ते महोदयेभ्यः कोटिशो धन्यवादान् वितीर्योपसंहरामि लेखविस्तरमिति।

विदुषामनुचरः

सूर्यनारायण शुक्लः।

# भेदसिद्धिस्थविषयाणामनुक्रमणिका ।

पृ०

श्रीविश्वेश्वरः शरणम् ।

न्यायपञ्चानन श्रीविश्वनाथभट्टाचार्यकृता

# भेदसिद्धिः ।

यतो भिन्नं (१)जगज्जातं यद्विभिन्नं जगत्त्रयात् ।

न्यायाचार्यपदाङ्काय वामाचरणशर्मणे ।

भट्टाचार्याय गुरवे नमोवाकं प्रशास्महे ॥

(१) जमुत्पत्ति गच्छतीति व्युपत्त्या जगच्छब्देन चेतनाचेतनात्मकप्रपञ्च उच्यते । जीवस्यापि शरीरवैशिष्ट्येन जन्यत्वमिति न कापि हानिः । ईश्वरप्रतियोगिकजडजीवधर्मिकभेदज्ञानस्येव जडजीवप्रतियोगिकेश्वरधर्मिकभेदज्ञानस्यापि मोक्षजनकत्वाभिप्रायेण भेदद्वयनिर्देशः ।

नन्वीश्वरस्यातीन्द्रियतया तत्प्रतियोगिकभेदस्य न प्रत्यक्षत्वसंभवः अभावप्रत्यक्षे प्रतियोगिप्रत्यक्षस्य करणत्वात् एवं जीवप्रतियोगिकस्य ईश्वरधर्मिकस्यापि भेदस्य न प्रत्यक्षत्वसम्भवः अभावप्रत्यक्षे अधिकरणप्रत्यक्षस्य करणत्वात् । न च आकाशे शब्दाभावस्य प्रत्यक्षत्वदर्शनेन अभावप्रत्यक्षेऽधिकरणज्ञानमात्रमपेक्षितं न तु तस्य प्रत्यक्षत्वमपीति वाच्यम्, अत्यन्ताभावप्रत्यक्षे अधिकरणप्रत्यक्षस्याप्रयोजकत्वेऽपि भेदप्रत्यक्षे अधिकरणप्रत्यक्षस्य प्रयोजकत्वोपगमात् अत एव रुचिदत्तेन 'रूपवदन्योन्यभावस्तु योग्योऽपि वायावधिकरणे योग्यताविरहान्न गृह्यते' इत्युक्तमिति चेन्न—

ईश्वरधर्मिको जीवप्रतियोगिको भेद ईश्वरस्य प्रत्यक्षः तस्य तादृशप्रत्यक्षसमवायित्वे 'उत्तमः पुरुषस्त्वन्य' इति स्मृतिरेव प्रमाणम् ईश्वरप्रतियोगिको जीवधर्मिकश्च भेदो जीवस्य प्रत्यक्षः । भेदप्रत्यक्षे

वन्दे वृन्दारकैर्वन्द्यं तदानन्दमयं(१) महः ॥

इह केचन भेदमप्रमाणकं मन्यन्ते । त एवं प्रष्टव्याः—किं भेदो नास्त्येव, उतास्ति प्रातिभासिकः, आहोस्विद्व्यावहारिकः, किमुतास्तु जगतां भेदो न तु जीवब्रह्मणोर्जीवानां वेति ।

तत्र नाद्यः—(२)निखिललोकानुभूयमानस्य भेदस्यापलापे विश्वविप्लवापत्तेः ।

ननु वैतण्डिकस्य मम कथं विभीषिकेति चेत्, तदेदं वैतण्डिकत्वं तव श्रद्दध्यां यद्यभेदादिपरतयैव न (३)प्रयतेथाः, अन्यथा अभेदखण्डन-

---

च न प्रतियोगिप्रत्यक्षं कारणं किन्तु अधिकरणप्रत्यक्षमेव अत एव स्तम्भादौ पिशाचभेदस्य प्रत्यक्षमित्यदोषात् ।

(१) नैयायिकनये ईश्वरे सुखाश्रयत्वस्य सुखरूपत्वस्य वाऽनङ्गीकारात् आनन्दमय इत्यत्र आनन्दपदं दुःखाभावपरम् अस्तु वा 'आनन्दं ब्रह्मण' इति श्रुत्या नित्यसुखाश्रयत्वं तस्य न तु सुखरूपत्वम् 'असुखम्' इति श्रुतेः मयट् प्रत्ययस्तु 'तत्प्रकृतवचने मयट्' इति सूत्रेण प्राचुर्यार्थे इति बोध्यम् ।

(२) निखिललोकेति । घटात्पटो भिन्न इति भेदानुभवस्यापलपितुमशक्यत्वादित्यर्थः । नच अयं भेदानुभवोऽयथार्थ इति वाच्यम्, घटः पटो न भवतीति प्रत्यक्षानन्तरं घटः पट एवेति विपरीतग्रहाभावेनायथार्थत्वासंभवात् ।

ननु 'नीलं तमः' इति प्रत्यक्षानन्तरं 'नेदं नीलं तमः' इति प्रात्यक्षिकबाधाभावेऽपि यथा भ्रान्तिस्त्वया स्वीक्रियते तथा बाधाभावेऽपि भेदप्रत्यक्षस्य भ्रान्तित्वं मया स्वीक्रियते इति चेन्न—तमसो नीलत्वे यौक्तिकबाधसत्त्वेनैव बाधात् प्रकृते च न बाधः भेदबाधकयुक्त्यभावादित्यलम् ।

(३) न प्रयतेथा इति । 'स प्रतिपक्षस्थापनाहीनो वितण्डा' इति

मात्रेण ममापि वैतण्डिकत्वं स्यात् । किंच भेदो नास्त्यन्यदेव भेदत्वेन प्रत्यभादित्यादिभेदबाधकानां भेदविषयकत्वाद् दुरपह्नवो भेदः, अन्यथा ध्वंसप्रागभावादीनामैक्ये (१)उत्पन्नविनष्टादिसंकरः स्यात् । किंच 'अस्थूलमनण्वह्रस्वमि'त्यादिश्रुत्या स्थूलादिभेदानां प्रतिपादनमप्यसङ्गतं स्यात् । स्थूलाणुह्रस्वादीनां परस्परभेदस्याप्रामाणिकत्वे अस्थूलमित्यादावेक एव भेदो दर्शितः स्यात् ।

अत्र कश्चित्–अस्थूलमनण्वित्यादिना स्थूलादिभेदो न प्रतिपाद्यते किन्तु स्थूलादीनामत्यन्ताभावः न विद्यते स्थूलं यत्रेत्यादि समासात् । तथा च सकलद्वैतात्यन्ताभाववद्वस्तुप्रतिपादितं भवति । इत्थं चोपादानकारणे निषिद्धानां प्रपञ्चानां मिथ्यात्वं सिध्यतीति

तन्न ब्रह्मण उपादानत्वाभावात् । 'यतो वा इमानि भूतानि जायन्त' इत्यादीनि कारणत्वमात्रं प्रतिपादयन्ति (२)'अन्नाद्भवन्ति भूतानि

---

हि वितण्डाया लक्षणम् । यदि भवान् वैतण्डिकस्तर्हि स्वपक्षस्थापने किमिति प्रवर्तते प्रतिपक्षस्थापनाहीनस्य परपक्षखण्डनमात्रस्यैव वितण्डापदार्थत्वादिति भावः ।

( १ ) उत्पन्नविनष्टेति । ध्वंसप्रागभावयोरैक्ये यो विनष्टः स उत्पन्नोऽपि स्यात् प्रागभावप्रतियोगिनः उत्पत्तिस्वीकारात् उत्पत्तौ प्रागभावस्य कारणत्वात् अन्यथा उत्पन्नस्य पुनरुत्पादप्रसङ्गादिति भावः ।

( २) अन्नाद्भवन्तीति । पर्जन्यादन्नसंभव इत्यत्र यथा पर्जन्योऽन्नस्य निमित्तकारणं तथा ईश्वरोऽपि जगतः निमित्तकारणमेव न समवायिकारणम् । तदाह—कारणत्वमात्रं प्रतिपादयन्तीति । मात्रपदेन ब्रह्मणः समवायिकारणत्वनिषेधः ।

पर्जन्यादन्नसम्भव' इतिवत् । अत एव (१)'यथोर्णनाभिः सृजते गृह्णते चे'त्यादिदृष्टान्तैर्निमित्तकरणत्वं बोध्यते ।

---

ननु 'जनिकर्तुः प्रकृतिः' इति सूत्रे शेखरे प्रकृतिरुपादानकारणमित्युक्तम् । तथा च यतो वा इमानि भूतानि जायन्त इत्यत्र ब्रह्मण उपादानत्वमेवान्यथा पञ्चम्यनुपपत्तिः युक्तं चैतत् तस्य स्थितिलयाधारत्वश्रवणेनोपादानत्वस्य युक्तत्वादिति चेन्न—पुत्रात्प्रमोदो जायते इत्युदाहरणेन 'प्रकृतिः कारणमि'ति काशिकादर्शनेन च प्रकृतिपदेन निमित्तकारणस्यापि ग्रहणेन ब्रह्मणः उपादानत्वाभावेऽपि पञ्चम्युत्पत्तौ बाधकाभावात् । युक्तं चैतत् अन्यथा ब्रह्मणः प्रजाः प्रजायन्ते इत्यत्र पञ्चमी न स्यात् नहि ब्रह्म जगत उपादानकारणं किन्तर्हि ब्रह्मशरीरं माया,यथोर्णनाभिः सृजते गृह्णते चेति दृष्टान्तात् न हि ऊर्णनाभिश्चेतनस्तन्तूनामुपादानं किन्तर्हि तच्छरीरम्। यच्च स्थितिलयाधारत्वेन समवायिकारणत्वसाधनं तदसमञ्जसम् ,पृथिव्याश्चतुर्विधभूतग्रामस्थितिलयाधारत्वेऽपि चतुर्विधभूतोपादानत्वाभावात् ।

यच्च शब्दरत्नकृता प्रकृतिपदस्य कारणमात्रपरत्वे'कारके इत्यधिकृतस्य कारणसामान्यवाचिनो निर्धारणसप्तम्यन्तस्यान्वयोऽसंभवी न हि कारणानां मध्ये उपादानकारणमितिवत् कारणानां मध्ये कारणमिति संभवति' इति बाधकमुक्तम् । तदप्यकिंचित्करम् कारके इति निर्धारणसप्तमीपक्षस्य भाष्ये कारकेष्वित्येव ब्रूयात् निर्धारणे बहुवचनस्यैव न्याय्यत्वादित्यादिना दूषितत्वेन तस्य निरुक्तार्थासाधकत्वात् । कारके इत्येकवचनस्येव जनिकर्तुरित्यत्र कारणानां मध्ये कारणमित्यर्थासंभवस्यापि निर्धारणषष्ठीदूषकत्वौचित्याच्चेत्यलमतिप्रपञ्चेन ।

(१) यथोर्णनाभिरिति । ननु 'ऊर्णनाभिर्लुताकीटः किंचित्कारणान्तरमनपेक्ष्य स्वयमेव सृजते स्वशरीराव्यतिरिक्तानेव तन्तून्बहिः प्रसारयति पुनस्तानेव गृह्णते च गृह्णाति स्वात्मभावमेवा-

न च 'ब्रह्मैवेदं विश्वमि'त्यादावभेदोपन्यासादुपादानोपादेयभावो मृद्धट इतिवदिति वाच्यं, 'माता भस्त्रा पितुः पुत्रो येन जातः स एव स' इत्यादौ निमित्तकारणेपि तथा प्रयोगात् । किंच भेदस्यासत्त्वे स्थूलाणुप्रभृतीनामर्थभेदाभावात् (१)सर्वोपादानं व्यर्थं स्यात् । एवं श्रोतव्य इत्यादौ भेदाभावे (२)प्रतिपत्तिचतुष्कं नोपन्यसनीयं स्यात् । एवं श्रोतव्य इत्यादौ श्रावणादेरिष्टसाधनत्वमर्थः साधनत्वं च भेदगर्भम् । एवं मन्तव्यश्चोपपत्तिभिरित्य(३)पि न स्यादेकोपपत्त्या चरितार्थत्वादित्यादिकमूह्यम् ।

(४)( नचैवं प्रपञ्चब्रह्मणोर्निर्धमकत्वाद्विरुद्धधर्मोपि तत्र नेति वाच्यं

---

पादयति'इति शाङ्करभाष्याद् ब्रह्मण उपादानकारणत्वमेव प्रतीयते न निमित्तकारणत्वमिति चेन्न—स्वशरीराव्यतिरिक्तानेव तन्तून् बहिः प्रसारयति इति भाष्याक्षरस्वारस्येन ऊर्णनाभिशरीरस्योपादानत्वावगमेऽपि ऊर्णनाभेरुपादानत्वानवगमात् । यथा पृथिव्यामोषधयः संभवन्ति इत्यग्रिमदृष्टान्तेन निमित्तकारणत्वस्य स्फुटीकरणाच्च न हि पृथिवी ओषधीनां समवायिकारणं किन्तु निमित्तकारणमिति ।

(१) सर्वेषां स्थूलाणुह्रस्वादीनामुपादानं व्यर्थं स्यात् स्थूलत्वाणुत्वह्रस्वत्वादीनामभिन्नतया एकनिषेधेनव गतार्थत्वादिति भावः ।

(२) दर्शनश्रवणमनननिदिध्यासनरूपम् 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्या विहितं प्रतिपत्तिचतुष्कमित्यर्थः ।

(३) उपपत्तिभिरिति बहुवचनमनर्थकं स्यात् उपपत्तीनां भेदाभावादिति भावः ।

(४) ( ) एतन्मध्यस्थः पाठः पुनरुक्त इव प्रतिभाति । यदि च 'न च प्रपञ्चब्रह्मणोः कथं भेदः, नित्यत्वादिविरुद्धधर्मात्' इति पाठः

नित्यत्वादिविरुद्धधर्मात् । ) नच ब्रह्मणो निर्धर्मकत्वाद्विरुद्धधर्मोऽपि तत्र नेति वाच्यं, निर्धर्मकत्वस्यैव धर्मस्य तत्र सत्त्वात् । तदपि तत्र कल्पितमिति चेत्—कल्पितविरुद्धधर्मैरेव भेदसिद्धिरपि स्यात् । भेदोऽपि तर्हि कल्पित एव सेत्स्यतीति चेन्न तन्नाशादिकल्पने गौरवात् तस्य नित्यत्वसिद्धेः ।

अत एव

(१)'द्वे ब्रह्मणी वेदितव्ये परं चापरमेवच ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' ॥

इत्यादिकमपि संगच्छते । अस्थूलमित्यादिवाक्ये स्थूलादिभेदस्तु स्पष्ट एवोच्यते । तस्य चात्यन्ताभावपरत्वे असङ्गमित्यनेन 'न तदश्नोति कंचन न तदश्नोति कश्चने'त्यनेन च सिद्धेरस्थूलादिवाक्यं व्यर्थमेव स्यात्, तद् ब्रह्म न कंचन व्याप्नोति एतावता

---

स्यात् तदा सम्यक् ।

ननु धर्मभेदादेव प्रपञ्चब्रह्मणोर्भेदः स च न सम्भवति निर्धर्मकत्वादिति शङ्कते—नचेति । सत्त्वादिति । तथाच निर्धर्मकत्वमसिद्धमिति भावः ।

(१) द्वे ब्रह्मणी इति । न चात्र भेदवाचकपदाभावाद् नास्याः श्रुतेर्भेदबोधकत्वमिति अद्वैतरत्नरक्षणोक्तं युक्तमिति वाच्यम्, द्वित्वस्य भेदव्याप्ततया भेदसिद्धेः । नच सिद्धोऽपि भेदः तत्त्वमसीत्यादिश्रुतिबाधित इति वाच्यम्, भिन्नसंबोध्यविषयत्वेन अस्या अपि श्रुतेर्भेदसाधकत्वात् । एकमेवाद्वितीयं ब्रह्मेति श्रुतिरपि ब्रह्मणि ब्रह्मप्रतियोगिकभेदमेव निषेधति न ब्रह्मातिरिक्तसत्तां भूमण्डले एक एवाद्वितीयो नरपतिर्युधिष्ठिर इति वाक्यवदिति बोध्यम् ।

ब्रह्मसम्बन्धो जगति निषिध्यते तद् ब्रह्म न कश्चन व्याप्नोति एतावता जगत्सम्बन्धो ब्रह्मणि निषिध्यते इत्यर्थस्य त्वत्सम्मतत्वात् तस्मात् (१)स्थूलादिभेद एव प्रतिपाद्यते । 'असङ्गम्' इत्यनेन सङ्गो ममता रागापरपर्य्यायो निषिध्यते ।

न तदश्नोति कंचनेत्यनेनात्मान्तरे ब्रह्मसंयोगो निषिध्यते, द्वितीयेन ब्रह्मण्यात्मा(२)न्तरसंयोगो निषिध्यत इति

---

( १ ) स्थूलादिभेदेति । स्थूलं यच्छरीरादि तद्भिन्नं यदणुमनः प्रभृति तद्भिन्नं चेत्यर्थः । तथाच भेदज्ञानादेव कैवल्यमिति भावः । यच्च अद्वैतरत्नकृता 'न विद्यते स्थूलं यत्र तदस्थूलम् , न विद्यते अणु यत्र तदनणु, इत्यादिना सकलद्वैतात्यन्ताभाववद्वस्त्वेव प्रतिपादितं भवतीति उक्तं तत्तु 'अस्थूलं तत् स्थूलादन्यत् एवं तर्ह्यणु अनणु अस्तु तर्हि ह्रस्वम् अह्रस्वम् एवं तर्हि दीर्घं नापि दीर्घम् अदीर्घम्' इत्यादि शाङ्करभाष्यापर्यालोचनमूलकम् तस्मान्नञ्तत्पुरुषस्यैव लाभादित्यलं मान्येषु कटाक्षनिक्षेपेण ।

( २ ) आत्मान्तरसंयोगो निषिध्यत इति । विभुनोः संयोगकारणानामन्यतरकर्मोभयकर्मावयवसंयोगाभावेन संयोगासंभवादित्यर्थः । यच्चाद्वैतरत्नकृतोक्तम् 'नित्य एव संयोगस्तयोरस्तु अन्यथा संयोगानभ्युपगमे विभुत्वभङ्ग' इति तदपि न चारु–सर्वमूर्तसंयोगस्यैव विभुत्वसंपादकतेति विभुनोः संयोगानभ्युपगमेऽपि बाधकाभावात् । यच्च ब्रह्मणः आत्मान्तरसंयोगनिषेधे प्रपञ्चस्य मायिकत्वेन सत्यानृतयोर्वास्तवसंयोगासंभव एव हेतुरुक्तोऽद्वैतरत्ने स च न सम्यक् 'उत्तमः पुरुषस्त्वन्यः' 'नत्वेवाहं जातु नासं नत्वं नेमे जनाधिपाः' इत्यादिभिः प्रपञ्च सत्यत्वावगमात् । यदपि 'निष्प्रयोजनसंयोगाभावप्रतिपादनस्यानुचितत्वादि'ति कथनं तदपि न मनोरमम् यथावस्थितब्रह्मस्वरूपज्ञानस्य अपवर्गसाधनत्वात् ।

मिश्राः(१) ।

अस्तु वा आनन्दरूपे ब्रह्मणि उपादानोपादेयभावनिषेधकं तत्; किं चाणु महद्दीर्घं ह्रस्वं चेत्यादौ अणुशब्दादेःपरिमाणवाचित्वात् । तदत्यन्ताभाव एव च तद्वतो भेद इत्यन्ताभावबोधनेऽपी(२)ष्टसिद्धिः । अत्यन्ताभावस्य वैधर्म्यात्मकभेदरूपत्वाच्च 'अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्' इत्यत्र गन्धवद्भेदस्य प्रतिपादनाच्च ।

न च तथापि निष्प्रयोजने भेदे न तात्पर्यं तात्पर्य्यविषये शब्दस्य प्रामाण्याद् भेदो न श्रुत्यर्थ इति वाच्यम्, अभेदस्यापि निष्प्रयोजनत्वेन श्रुत्यर्थत्वानापत्तेः । अभेदज्ञानं प्रयोजनमिति चेद्भेदज्ञानस्यापि तथात्वात् ।

किम्मानमत्रेति चेत्, अस्थूलादिवाक्यमेव । वस्तुनि तस्य तात्पर्य्यं न तु ज्ञान इति चेत्, तथापि यत् किंचिद्वस्तुनि न तात्पर्य्यं किन्त्वस्थूलादिस्वरूपे । अन्यथा तावद्विशेषणवैयर्थ्यापत्तेरतस्तात्पर्य्यविषयतया भेदस्यापि श्रुत्यर्थत्वसिद्धेः ।

---

(१) "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति श्रुतिरपि इवपदसंदानेन स संसरति य इह नानेव पश्यति नतु वस्तुगत्यैव यो नाना पश्यतीत्यर्थात् अभेदनिन्दाप्रतिपादनेन भेदस्यैव वास्तविकत्वं बोधयति ।

मिश्राः-भेदरत्ने शङ्करमिश्रा इत्यर्थः ।

(२) इष्टसिद्धिरिति । धर्मिभेदधर्मात्यन्ताभावयोः समनियतत्वेनैकत्वादिति भावः ।

(१)वस्तुतस्तु ज्ञानार्थमेव तादृशं वस्तु तत्र प्रतिपाद्यते तथाहि(२) 'एतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमि'त्यादिना स्वरूपमुक्त्वा 'यो वा एतदक्षरं गार्ग्यविदित्वास्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैति स (३)कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मण' इत्यनेन तादृशस्वरूपज्ञानस्य फलाभिधानात् 'ब्रह्मैवेदं विश्वमि'त्यादौ तु

---

(१) 'ननु अस्थूलमनण्वित्यादिश्रुतितात्पर्यविषयत्वस्य भेदे सत्त्वेऽपि भेदज्ञानं निष्प्रयोजनमितिशङ्कां स्थूलादिभिन्नत्वेन ब्रह्मज्ञानस्य कार्पण्यात्ययरूपं फलं प्रतिपादयति वस्तुतस्त्विति ।

( २ ) 'स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन' इति (बृ० ३अ० ८ ब्रा०) न अश्नाति किं चनेत्यस्य किंचिन्न भक्षयतीत्यर्थः । तर्हि कस्यचिद्भक्ष्यं भवतु नेत्याह न तदश्नाति कश्चनेति न कस्यापि भक्ष्यमित्यर्थः । शङ्करमिश्रा भेदसिद्धिकृतश्च अश्नोतीति पाठमभिप्रयन्ति तदनुरोधेन व्याप्नोतीत्यर्थ इति व्याख्यातमितिध्येयम् ।

( ३ ) कृपण इति । कृपणः पणक्रीत इव दासादिः । अयमाशयः यथोक्तब्रह्माज्ञानवान् कृपणः जननमरणप्रबन्धारूढः संसरति यस्तु यथोक्तब्रह्मज्ञानवान् स ब्राह्मणः न जननादिप्रबन्धारूढः मुक्त इति यावत् सेवाधर्मो ब्राह्मणस्य निषिद्ध इति स पणक्रीतो न भवतीति ब्राह्मण इत्यनेन सूचितम् ।

(१)जन्यत्वादभेदकथनमित्युक्तं, वक्ष्यते च स्पष्टतरमुपरिष्टात् ।

(२)किंच शरीराहंबुद्धेः दुःखसंघातबीजभूताया निरासाय शरीरादिभेदज्ञानं परमपुमर्थसाधनमिति कथं न तत्र तात्पर्य्यम् ।

किं तत्र मानमिति चेत्—

'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय (३)शरीरमनुसंज्वरेत्' ॥
'नैव स्त्री न पुमानेष न चैवायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन स युज्यते' ॥

'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा' इत्यादिश्रुतयः ।

इदन्तु बोध्यम्—अविनाशीत्यनेन विनाशिनो भेदः साक्षादेव प्रतिपाद्यते । न विद्यन्ते विनाशिनोऽत्रेत्यर्थस्तस्येति चेत् , तथाप्यनुच्छित्तिधर्मेत्यनेन भेद एव प्रतिपाद्योऽन्यथा (४)पौनरुक्त्यापत्तेः । अनुच्छि-

---

(१) जन्यत्वादभेदकथनमिति । ब्राह्मणोऽस्य मुखमासीदितिवदिति भावः । यद्वा 'ब्रह्मैवेदं विश्वं' विश्वान्तर्यामीत्यर्थ इति नोपादानोपादेयसाधकमिदमिति ।

(२) भेदज्ञानस्य ब्राह्मणशब्दप्रतिपादितफलवत्त्वं प्रतिपाद्य परमपुमर्थसाधनत्वमप्याह—किं चेति ।

(३) अनुसंज्वरेदिति । शरीरसम्बन्धाभिमानकृतदुःखेन दुःखी किमर्थं भवेदिति भावः ।

(४) अविनाशीत्यस्य न विनाशी यत्र सोऽविनाशी इति बहुव्रीहिणा अनश्वरधर्मकत्वमर्थः । न उच्छित्तिर्यस्य सोऽनुच्छित्तिः स धर्मो यस्येति समासाद् अनुच्छित्तिधर्मेत्यस्यापि अनश्वरधर्मकत्वमर्थः तथा च पौनरुक्त्यमिति तत्परिहाराय तत्पुरुषमङ्गीकृत्य अ-

त्तिर्धर्मो यस्येत्यर्थ इति चेद्—न, तवात्मनो निर्धर्मकत्वात् । किं चाऽनुच्छित्तिरुच्छेदाभावः, स च घटादावपि प्रथममस्त्येवातोऽनुच्छित्तिधर्मकाद्भेदोऽवश्यं प्रतिपाद्यः ।

एवं मार्कण्डेयपुराणे—

'नाहं शरीरं न मनो यतोऽहं पृथक् शरीरान्मनसस्तथाहम्'

मोक्षधर्मे—

'यथैव बध्यते मत्स्यस्तथैषोऽप्यनुबध्यते ।
सस्नेहः सहवासाच्च साभिमानाच्च नित्यशः ॥
यदा तु मन्यतेऽन्योऽहं मम एष इति द्विज ।
तदा स केवली(१)भूतः षड्विंशमनुपश्यति ॥'

विष्णुपुराणे—

'सर्वं देहोपभोगाय कुरुते कर्म मानवः ।
देहश्चान्यो यदा पुंसस्तदा(२) बन्धाय तत्परम् ॥' इति ।

---

विनाशीत्यस्य विनाशिभिन्न इत्यर्थः । न उच्छित्तिर्धर्मो यस्येति बहुव्रीहिणा अनुच्छित्तिधर्मेत्यस्य वा विनाशिभिन्न इत्यर्थ इत्यङ्गीकर्तव्यमिति विनश्वरशरीरादिभेदज्ञानस्य पुमर्थसाधनत्वं श्रौतमिति भावः ।

(१) केवलीभूतः-देहतादात्म्याध्यासरहितत्वेन सुखदुःखरहित इत्यर्थः ।

षड्विंशमिति । पञ्चविंशतितत्त्वेभ्यो बहिर्भूतमीश्वरं पश्यतीत्यर्थः ।

पञ्चविंशतितत्त्वानि च—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ इति ।

(२) बन्धायेति । अबन्धाय इति पाठो युक्तः प्रतिभाति । यदा

(१)'एतत् सर्वं यदयमात्मा' आत्मवदित्यर्थः । तस्मादभेदो न, विलक्षण इत्युक्तम् । इत्थं च(२) छान्दोग्येऽपि शरीरातिरिक्तस्यात्मनः प्रतिपादनं यत्तदपि साधु संगच्छते ।

ननु भेदबुद्धौ (३)परस्परवैलक्षण्यज्ञानं हेतुस्तत्र च भेदज्ञानमित्यन्योन्याश्रय इति चेद्—

---

पुंसोऽन्यो देहस्तदा तत्कर्म परं केवलम् अबन्धाय बन्धाभावाय भवतीत्यर्थसङ्गतेः ।

(१) ननु शरीरात्मनोर्भेदे 'एतत्सर्वं यदयमात्मा' इति श्रुतिविरोध इत्याशयेन परिहरति-एतदिति ।

एतत्सर्वं शरीरादिकम् आत्मा आत्मवदित्यर्थः । अभेदो न-शरीरात्मनोरभेदो नेत्यर्थः । विलक्षणः इत्यस्य किन्त्वित्यादिः । तथाच, भिन्न इत्यर्थः । तदेव स्पष्टयति इत्थं चेति । आदर्शपुस्तके एतदित्यारभ्य इत्युक्तमित्यन्तस्य स्थाने 'एतत्सर्वं यदयमात्मवत्तस्मादभेदेन विचक्षणैरित्युक्तम्' इति पाठो वर्तते । स चासंलग्नत्वादुपेक्षितः ।

(२) छान्दोग्येऽपीति । 'मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां, न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति मन्त्रेणेति शेषः । अयंभावः इदं शरीरं मृत्युना आत्तम् नश्वरमित्यर्थः अमृतस्य नित्यस्य आत्मन अधिष्ठानम् । एतेन शरीरात्मनोर्भेदः स्फुटं प्रतिपादित इति ।

(३) ननु भेदबुद्धौ परस्परवैलक्षण्यज्ञानं कारणमतो दूरस्थवृक्षयोः परस्परवैलक्षण्यज्ञानाभावान्न भेदग्रह इति शङ्कां परिहरति दूरस्थेति । परस्पर वैलण्यज्ञाने भेदस्मरणस्य हेतुत्ववादिमतमाह-भेदस्मरणेति ।

न, भेदप्रत्यक्षे तद्धेतुत्वे मानाभावात् । वैलक्षण्यधीस्तत्र जाताप्यन्यथासिद्धैव, न वा भेदबुद्धेस्तत्र हेतुत्वं मन्यामहे येनान्योन्याश्रयः । दूरस्थवृक्षयोस्त्वैक्यभ्रमेण तज्जनकदोषेण वा प्रतिबन्धान्न भेदधीः ।

भेदस्मरणस्यैव तत्र हेतुत्वमित्यन्ये । भेदानुमित्यादौ तद्धेतुतायाः (१)शङ्कितुमप्यशक्यत्वात् ।

ननु भेदबुद्धिर्भिन्नेऽभिन्ने वा ? आद्ये (२)आत्माश्रयः, अन्त्ये विरोध इति चेत्–किमिदं(३) दूषणम् सदूषणे निर्दूषणे वा 'आद्ये' आत्माश्रयः । 'अन्त्ये' विरोधः । (४)न वा कपालभूतलादौ घटपटा-

---

( १ ) शङ्कितुमिति । अनुमितौ परामर्शस्यैव हेतुत्वादिति भावः ।

( २ ) आत्माश्रय इति । तथा च भेदरत्ने शङ्करमिश्रः–'भेदाऽभिन्ने भिन्ने वा वर्तते ? न तावदाद्यः विरोधात् नह्यभिन्नं भिन्नं भवति । द्वितीये तु तद्भेदभिन्ने तद्भेदवृत्तौ कथं नात्माश्रयः भेदान्तरेण भिन्नेऽधिकरणे भेदवृत्तावनवस्था' इति ।

( ३ ) उत्तरयति–किमिदमिति । तद्दूषणविशिष्टे तद्दूषणवृत्तावात्माश्रयः निर्दूषणे दूषणवृत्तौ विरोधः न हि निर्दूषणं सदूषणं भवतीति भावः ।

( ४ ) न वा कपालेति । अयंभावः त्वद्रीत्या भेदो भिन्नेऽभिन्ने वा वर्तते इति विकल्पेन भेदखण्डनवत् घटवति कपाले घटो वर्तते घटरहिते वा आद्ये आत्माश्रयः द्वितीये विरोध इति घटस्यापि कपालादौ वृत्तिता न सिध्येदिति । समवायेन घटाधिकरणमभिप्रेत्य कपालेति, संयोगेन घटाधिकरणमभिप्रेत्य भूतलेति ।

दीनां वृत्तिरप्येवं स्यात्, (१)तस्माच्च त्वदभ्युपगतोऽभेदोऽपि । (२)अभेदस्य स्वरूपत्वान्न दोष इति चेद्-(३)भेदस्यापि स्वरूपत्वं स्यात् । तर्हि घटे पटभेद इत्याधाराधेयभावो न स्यादिति चेन्न-प्रत्यक्षस्य दुरपलपत्वेन भेदसिद्धौ (४)तस्यौपचारिकत्वात् राहोः शिर आनन्दो ब्रह्मण इतिवत् ।

(५) वस्तुतो घटोपलक्षिते घटादेर्वृत्तिवत् घटत्वोपलक्षितेऽनित्य

---

(१) तस्माच्चेति । तस्मात्-उक्तदूषणग्रासात्त्वदभ्युपगतोऽभेदोऽपि न सिध्येदित्यर्थः । अयंभावः अभेदो भिन्ने ब्रह्मणि वर्तते अभिन्ने वा ! आद्ये विरोधः न हि भिन्नमभिन्नं भवति । द्वितीये तेनैवाभेदेनाभिन्ने अभेदान्तरेण वा आद्ये आत्माश्रयः द्वितीयेऽनवस्थेति अभेदोऽपि न सिध्येदिति ।

(२) अभेदस्येति । अभेदो ब्रह्मणि वर्तते इति न ब्रूमः किन्तर्हि अभेदस्वरूपमेव ब्रह्मेति न पूर्वोक्तदोषानुषङ्ग इति भावः ।

(३) भेदस्येति । तर्हि वयमपि भेदो घटे वर्तते इति न ब्रूमः येन-भिन्नेऽभिन्ने वा वर्तते इति विकल्पावकाशः स्यात् किन्तर्हि घटस्वरूप एव भेद इति न वृत्तिविकल्पावकाश इति भावः । तर्हीति । पटभेदस्य घटरूपत्वे आधाराधेयभावो न स्यादिति भावः ।

(४) तस्यौपचारिकत्वादिति । पटभेदस्य घटरूपत्वसिद्धौ आधाराधेयभाव औपचारिक इति भावः ।

(५) पटभेदस्य घटरूपतामनङ्गीकृत्यापि समाधत्ते-वस्तुत इति । अयंभावः तद्भेदभिन्ने भेदो वर्त्तते न वेति प्रश्ने 'वर्तते' इत्येवोत्तरम् । न च आत्माश्रयः । तद्विशिष्टे भेदाङ्गीकारेऽपि तद्भेदे भेदानङ्गीकारेणात्माश्रयाभावात् । यद्विशेष्यवृत्ति तद्विशेषणवृत्तीति नियमाभावात् । नहि घटोऽनित्य इत्युक्ते घटत्वेऽप्यनित्यत्वं भासते त-

त्ववच्च भेदोपलक्षिते भेदोप्यविरुद्धः । एवं खड्गी शूर इतिवद्धनवान् सुखीतिवच्च भेदविशिष्टो भेदवान्न विरुद्ध्यते ।

न च घटभेदे घटभेदः स एव चेद्, आत्माश्रयः तत्रान्यस्तत्राप्यन्य इति चेदनवस्थेति वाच्यम्, (१)अन्त्ययोः कल्पनागौरवात् । (२)न चाद्यस्यात्माश्रय इति वाच्यं योगिज्ञानादिविषयतायामात्माश्रयस्य दुरपह्नवत्वात् ।

## भेदस्वरूपे

(३)ननु भेदः किं वैधर्म्यम् उत स्वरूपं किं वाऽन्योन्याभावः । तत्र

---

द्वत् नहि खड्गी शूरः इत्यत्र विशेष्ये शूरत्वप्रतिपादने विशेषणे खड्गेऽपि शूरत्वं भासते नहि धनवान् सुखीत्युक्ते धने सुखित्वं प्रतीयते तद्वत् । ननु तत्र घटत्वमुपलक्षणं न तु विशेषणं तर्हि प्रकृतेऽपि तद्भेदोपलक्षिते भेदवृत्तौ बाधकाभावः घटोपलक्षिते घटवृत्तित्ववदिति ध्येयम् ।

घटोपलक्षिते इति । घटोपलक्षितकपालभूतलादावित्यर्थः ।

यद्विशेष्यवृत्ति तद्विशेषणवृत्तीतिनियमस्य खड्गी शूर इत्यादौ व्यभिचारेणानभ्युपगमात् भेदावशिष्टेऽपि भेदवृत्तौ बाधकाभावमाह एवमिति ।

(१) अन्त्ययोरिति । तत्रान्यस्य तत्रान्यस्य भेदस्य स्वीकारे कल्पनागौरवमिति आद्यपक्षोऽङ्गीक्रियते इति भावः ।

(२) आत्माश्रयं शङ्कते–न चेति । इष्टापत्त्या परिहरति–योगीति ।

अयंभावः योगिनां सर्वविषयकज्ञानवत्त्वेन विषयताज्ञानमपि वर्तते इति विषयतापि ज्ञानीयविषयताया आश्रय इत्यात्माश्रय इति ।

( ३ ) वैधर्म्यं भेद इति भाट्टैकदेशिनः । घटभेदः पटस्वरूपमिति प्राभाकराः तन्मतेऽभावस्याधिकरणरूपतास्वीकारात् । अन्योन्याभाव इति नैयायिकाः ।

(१)नाद्यः तस्य तद्वृत्तिधर्मरूपस्य(भेद)गर्भत्वात्। न द्वितीयः (२)स्वरूपमात्रस्य घटभेदत्वे घटस्यापि तदात्मकत्वापत्तेः तत्तत्स्वरूपात्मकत्वे

---

(१) ननुघटनिष्ठात्यन्ताभावप्रतियोगिधर्मवत्त्वं पटस्य, पटनिष्ठात्यन्ताभावप्रतियोगिधर्मवत्त्वं घटस्य, इति यद्वैधर्म्यं तदेव भेद इत्याशयेन परिहरति नाद्य इति अयंभावः तादृशो धर्मः घटत्वपटत्वादिकमेव वाच्यम् तत्र च भेदकधर्मान्तराभावात् घटत्वपटत्वयोरैक्यं तयोरैक्ये च तदाश्रयस्य सुतरामैक्यम् । एकस्यैव धर्मस्य स्वाश्रयात्स्वाश्रयभेदकत्वस्यानुचितत्वात् अन्यथा घटत्वस्यापि घटाद् घटभेदकत्वं स्यात् अथोच्येत घटत्वपटत्वे स्ववृत्तिघटत्वत्व पटत्वत्वरूपवैधर्म्यभेदभिन्ने तर्हि ते अपि स्वगतवैधर्म्यान्तरभेदभिन्ने इत्यनवस्था स्यात्तादृशस्य अनुभवाविषयस्य वैधर्म्यान्तरस्य स्वीकारापत्तिश्चेति ।

(२) स्वरूपमात्रस्येति । अयंभावः घटभेद इत्यत्र घटो विशेषणमुपलक्षणं वा आद्ये घटभेदः पटस्वरूपं प्रत्यक्षेण गृहीतमिति विशेषणादिव्यतिरिक्तविशिष्टपदार्थानङ्गीकारात् । घटोऽपि पटात्मनि प्रविष्ट इति घटपटयोरैक्यापत्तिः । तदात्मकत्वापत्तेः—पटात्मकत्वापत्तेरित्यर्थः ।

ननु घटभेदः स्वरूपं पटस्येत्युक्ते घटपटयोर्नाभेदः प्रतीयते तथा सति घटाद्भेद इति न स्यात् किंतु घटः पटः इति सामानाधिकरण्यं स्यादिति चेन्न पारमार्थिकाभेदस्य स्वीकारेऽपि अविद्याकल्पितभेदाभ्युपगमेन घटाद् भेद इति व्यवहारोपपत्तेः ।

द्वितीये भेद इत्येतन्मात्रस्य पटस्वरूपत्वं, न घटस्यापि, अन्यथा घटस्यापि भेदरूपतया तन्निरूपकत्वं घटस्य न स्यात् निरूप्यनिरूपकभावस्य भिन्ननिष्ठत्वादितिस्वीकारादिति तदपि न युक्तम् निष्प्रतियोगिकस्य भेदस्य प्रमाणागोचरत्वादिति ।

त्वननुगमात् । न तृतीयः (१)तत्प्रतियोगिनःस्तम्भकुम्भतादात्म्यस्यासत्त्वादन्योन्याभावस्याप्रामाणिकत्वापत्तेः ।

(२)न च स्तम्भतादात्म्यं स्तम्भे प्रसिद्धं कुम्भे निषिध्यते इति वाच्यं, रङ्गे रजतभ्रमानन्तरं नेदं रजतमिति बाधस्थले तादात्म्य(३)मात्रनिषेधे 'रङ्गरजते' इति ज्ञानापत्तेः । तत्र रजतव्यक्तेरपि निषेध्यत्वे तद्वदेव 'स्तम्भो न कुम्भ' इत्यत्रापि (४)कुम्भस्यासत्त्वापत्तेः ।

---

(१) तादात्म्याभावोऽन्योन्याभाव इति प्रतीत्यनुसारेण अन्योन्याभावस्य तादात्म्यमेव प्रतियोगि इत्यङ्गीकारेण दोषमाह—तत्प्रतियोगिन इति । भेदप्रतियोगिन इत्यर्थः । घटपटयोस्तादात्म्यस्यात्यन्तमसत्त्वेन तादात्म्यप्रतियोगिकाभावप्रतीतौ तादात्म्यस्य विशेषणत्वमुपलक्षणत्वं वा न सम्भवतीति अन्योन्याभावप्रतीतिरेव न स्यात् सत्त्वे वाऽसद्विषयकत्वादप्रमा स्यादिति भावः ।

(२) ननु स्तम्भकुम्भतादात्म्यस्याप्रसिद्धत्वेऽपि स्तम्भतादात्म्यं स्तम्भे प्रसिद्धं तदेव प्रतियोग्यस्त्वित्याह—न चेति ।

(३) तादात्म्यमात्रनिषेधे इति । मात्रपदेन रजतादिनिषेधव्यावृत्तिः । तथा च रजततादात्म्यस्य निषेधेऽपि रजतस्य निषेधाभावात् रङ्गरजते इति ज्ञानापत्तिः । घटः पटो नेत्यनेन घटे पटतादात्म्यनिषेधेऽपि घटपटावितिवत् ।

(४) कुम्भस्यासत्त्वापत्तेरिति । यथा इदं रजतमिति ज्ञानानन्तरं नेदं रजतमिति ज्ञानेन रजतस्यासत्त्वं प्रतीयते तथा स्तम्भो न कुम्भ इत्यनेन कुम्भस्याप्यासत्त्वं स्यात्तथा च भेदप्रतियोगिनोऽभावान्न भेदसिद्धिः । इदम् अनिर्वचनीयरजतस्य क्वाप्यसत्त्ववत् कुम्भस्य क्वापि सत्त्वं न स्यादिति वेदान्तिवासनयोक्तम् ।

किं (१)च स्तम्भे कुम्भभेदज्ञानं धर्मिप्रतियोगि(भेद)ज्ञानाधीनं तच्च प्रतियोगिनो धर्मिभेदज्ञाने सति तथा चान्योन्याश्रयः ।

(२)न च वस्तुतो भिन्नस्यैव ज्ञानं हेतुर्न तु भेदस्यापीति वाच्यं द्विचन्द्रादिभ्रमा(३)नुपपत्तेः ।

नच बिम्बप्रतिबिम्बयोर्ब्रह्मजीवयोरभेदस्थले(मते)ऽपि 'इदम् एतदभिन्नम्' इतिज्ञानेऽभिन्नधर्मिप्रतियोगिज्ञानस्य हेतुत्वेऽन्योन्याश्रयः भिन्नधर्मप्रतियोगिज्ञानस्य हेतुत्वे तद्विरुद्धाभेदज्ञानानुपपत्तिरिति वाच्यं भेदज्ञानस्य काल्पनिकत्वेन तात्त्विकाभेदज्ञानप्रतिबन्धकत्वायोगात्, किं च अभेदस्य निष्प्रतियोगि(४)कवस्तुस्वरूपत्वात् न धर्मिप्रतियोगि ज्ञानापेक्षा ।

न चान्योन्याभावोऽपि वस्तुस्वरूपात्मकः, तथा सति कपाल भेदात्मकघटस्य कपाले सत्त्वात् कपालस्य स्वभेदापत्तिः, एवं

---

( १ ) ननु रङ्गे रजतनिषेधेऽपि अन्यत्र रजतसत्तावत् स्तम्भे कुम्भनिषेधेऽपि अन्यत्र कुम्भसत्ता न निषिध्यते इति न प्रतियोग्यप्रसिद्धिनिबन्धनभेदाप्रसिद्धिरित्यरुचेराह—किञ्चेति । भेदबुद्धौ धर्मिप्रतियोगिभेदज्ञानस्य हेतुत्वादिति भावः ।

( २ ) ननु भेदज्ञानेऽन्योन्याश्रयवत् अभेदज्ञानेऽपि अन्योन्याश्रयः अभिन्नधर्मिप्रतियोगिज्ञानस्य अभेदज्ञाने हेतुत्वादिति शङ्कते नचेति ।

( ३ ) भ्रमानुपपत्तेरिति । द्विचन्द्रादिस्थले चन्द्रभिन्नस्य चन्द्रस्य अभावेन भेदस्याभावादिति भावः ।

( ४ ) निष्प्रतियोगिकेति । इदं चिन्त्यम्—अभेदस्य भेदाभावरूपतया भेदस्य च प्रतियोग्यंशे नित्यसाकाङ्क्षत्वेन निष्प्रतियोगिकत्वकथनस्य साहसमात्रत्वात् ।

क्रमेण परमाणुपर्य्यन्तस्य स्वभेदापत्त्या शून्यतापत्तेरभेदज्ञानापत्त्या भेदज्ञानप्रतिबन्धात् ।

न वा भेदत्वं सुवचं तथा हि न तावज्जातिर्जात्यादिसाधारण्यात् । नापि तादा(१)त्म्यावच्छिन्नप्रतियोगिताकाभावत्वं तदात्म्यस्य भेदाभावरूपत्वेनान्योऽन्या(२)श्रयात् । संयोगिभेदाभावस्य संयोगरूपत्वात् संयोगावच्छिन्नप्रतियोगिताकात्यन्ताभावेऽतिव्याप्तेः । नापि संसर्गाभावभिन्नाभावत्वं तत् संसर्गाभावत्वं तु संसर्गावच्छिन्नप्रतियोगिकाभावत्वमिति युक्तम्, ध्वंसप्रागभावयोः प्रतियोगितावच्छेदकसंबन्धे (३)मानाभावेन तत्राव्याप्तेः संयोगितादात्म्यस्य संयोगिरूपतया संयोग्यन्योन्याभावाव्याप्तेश्च ।

किं च भेदत्वं यत् किंचिदस्तु तत्रापि भेदो वाच्यस्तथा चान्योन्याश्रय इति—

---

( १ ) जात्यादिसाधारण्यादिति । घटत्वभिन्नं पटत्वमिति प्रतीत्या जातावपि भेदस्य वृत्तेः जातौ च न जातेर्वृत्तित्वमनवस्थाभयादिति भावः ।

( २ ) तादात्म्यावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वम् तादात्म्यं च भेदविशिष्टान्यत्वं वैशिष्ट्यं च स्वप्रतियोगिवृतित्व स्वानुयोगिवृत्तित्वोभयसंबन्धेनेति भेदलक्षणे तादात्म्यस्य तादात्म्यलक्षणे भेदस्य च प्रविष्टत्वादन्योन्याश्रय इति भावः ।

( ३ ) मानाभावेनेति । समवायेन घटाधिकरणे संयोगेन घट नास्ति संयोगेन घटाधिकरणे समवायेन घटो नास्तीति प्रतीत्योर्वैलक्षण्योपपत्तयेऽत्यन्ताभावीयप्रतियोगितायां संबन्धावच्छिन्नत्वमङ्गीक्रियते ध्वंसे तादृशप्रतीत्यभावेन नाङ्गीक्रियते इति भावः ।

## भेदस्वरूपे सिद्धान्तः ।

मैवं—(१)विरुद्धधर्मस्य वैधर्म्यरूपत्वात् विरुद्धत्वं तदभावव्याप्यत्वं तच्चानुगमकमात्रं तेन घटत्वाद्यवच्छिन्नप्रतियोगितासम्बन्धेन तादृशप्रतियोगितानिरूपितानुयोगितासम्बन्धेन वा घटादेर्भेदो भासते सच भेदो पटत्वादिरेवेति ।

एवं (२)स्वरूपभेदेपि तदवच्छिन्नप्रतियोगिताकत्वमनुगमकम् । अतएव 'सत्यं भेदस्तु वस्तूनां स्वरूपं नात्र संशय' इत्यागमं प्रमाणयन्ति घटः पटो नेति तु अन्योन्याभाव एव भासते लाघवेनान्योन्याभाव एव शक्तेः।

कुम्भस्त(३)म्भौ नेत्यत्र स्तम्भतादात्म्यस्य प्रसिद्धस्यैव निषेधो न तूभयतादात्म्यस्याप्रसिद्धस्य । इदं रजत(४) मितिभ्रमे रजतस्य तादात्म्येन प्रतीतत्वाद्बाधेन च रजतभेदग्रहे कुतो रङ्गरजते

(१) भेदो वैधर्म्यमिति पक्षोक्तं दूषणं परिहरति-विरुद्धधर्मस्येति

(२) घटभेदः पटस्वरूपमिति पक्षोक्तं बाधकं निराकरोति एव स्वरूपेति ।

(३) अन्योन्याभावो भेद इति पक्षोक्तं दूषणं निरचष्टे-कुम्भेति ।

(४) इदं रजतमिति । यत्र घटः पटश्च वर्तते तत्र पटे घटतादात्म्यनिषेधेऽपि घटपटाविति प्रतीतिर्भवतु घटपटयोस्तत्र सत्त्वात् यत्र तु रजतं न वर्तते किन्तु रङ्गे रजततादात्म्यग्रहेण इदं रजतमिति ज्ञानमासीत् तत्र रजततादात्म्यनिषेधे कुतो रङ्गरजते इति ज्ञानापत्तिः तत्र रजतस्यासत्त्वादिति सूक्ष्ममीक्ष्यताम् नहि तादृशे स्थले वयं यूयमिव रजतसत्तामङ्गीकुर्म इति येन तादृशी प्रतीतिरापद्येतेति भावः ।

इति ज्ञानापत्तिः । धर्मि(१)प्रतियोगिज्ञानं धर्मितावच्छेदक प्रतियोगितावच्छेदकप्रकारकम् । द्विचन्द्रभ्रमस्थले तु तच्चन्द्रत्वं धर्मितावच्छेदकं प्रतियोगितावच्छेदकं च तत्तायाश्चन्द्रस्य च भेदो भासते दोषात्, अभेदश्च तेनैव प्रतिबन्धान्न भासते ।

अन्येतु वस्तुतो भिन्नयोर्धर्मिप्रतियोगिनोर्ज्ञानं भेदलौकिकप्रत्यक्षे हेतुः । द्विचन्द्रभ्रमे तु भेदस्योपनीतभानं न लौकिकम् । अन्यदा-तु न भेदभ्रमस्तद्धेतुदोषाभावादिति ।

न वा शून्यतापत्तिरुक्ता युक्ता स्वरूपस्य (भेदत्वे, कपालभेदात्मकघटत्वावच्छिन्नाधिकरणतायाः कपाले स्वीकारेऽपि कपालभेदत्वावच्छिन्नाधिकरणताया अनङ्गीकारात् गुणे विशिष्टसत्तात्मकसत्ताधिकरणताया अङ्गीकारेऽपि विशिष्टसत्ताधिकरणताऽनङ्गीकारवत्) ।

(नापि भेदत्वस्य दुर्वचत्वमखण्डोपाधित्वाङ्गीकारात् । )

न चाखण्डोपाधिर्न द्रव्यादिष्वन्तर्भवतीति पदार्थान्तरं वाच्यं तथा चापसिद्धान्त इति वाच्यम्, एकदेशिमतेनाभिधानात् ।

---

(१) धर्मिप्रतियोगिज्ञानमिति । अत्र ग्रन्थस्त्रुटित इव प्रतिभाति पूर्वोत्तरग्रन्थपर्यालोचने त्वयमभिप्रायो गम्यते यत् धर्मितावच्छेदकप्रतियोगितावच्छेदकयोर्भेदज्ञानं भेदबुद्धौ कारणं नतु धर्मिप्रतियोगिनोर्भेदो भेदज्ञानं वा एवं च द्विचन्द्रभ्रमस्थले धर्मिणः प्रतियोगिनश्चैक्येऽपि धर्मितावच्छेदकप्रतियोगितावच्छेदकयोर्भिन्नत्वेन ज्ञानमेव द्विचन्द्रभ्रमे चन्द्रभेदबुद्धौ कारणम् प्रकृते धर्मितावच्छेदकस्य प्रतियोगितावच्छेदकस्य चैक्येऽपि दोषाद् भेदज्ञानसम्भव इति, एवं च धर्मिप्रतियोगिनोर्भेदबुद्धौ धर्मिप्रतियोगिभेदज्ञानस्य कारणत्वाभावान्नान्योन्याश्रय इति भावः ।

यत्तु तथा(१) सत्यपसिद्धान्तो दूषणमेव न सर्वत्रैवं वक्तुं शक्यत्वादिति तन्न अपसिद्धान्तस्वरूपापरिचयात् स्वीकृतसिद्धान्तपरित्यागस्य तत्त्वात् 'सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्ग' इति तल्लक्षणात् । अत एव सत्कार्य्यस्वीकारिणा आविर्भावस्यासतः कार्य्यत्वाभ्युपगमेऽपसिद्धान्त इत्युदाहृतम् । अन्यथा परिणामवादादि परित्यागात् त्वमप्यपसिद्धा(२)न्ती भवेः । किंच भेदवादिनामनैक्यान् मीमांसकमतेनाभिधानान्न क्षतिः नैयायिकादीनामप्यनियतपदार्थवादीनां नायमपसिद्धान्तः ।

वैशेषिका अपि केचिज्जात्युपाधिभेदेन द्विविधं सामान्यं वदन्तः क्लृप्तेष्वेवान्तर्भावयन्ति । न चैवं गोत्वा(३)दिकमपि तथैवास्त्विति जात्यपलापः स्यादिति वाच्यं जातेरपि (४)तत्त्वानपायात्, अभावे(५) सम(६)वायाभावात् परं तस्य न जातित्वम् समवायो-

---

(१)तथा सतीति । एकदेशिमतेनाभिधानमाश्रित्यापसिद्धान्तवारणे ।

(२) अपसिद्धान्ती भवेरिति । एवं च स्वयमभ्युपगम्य तत्त्यागे एव अपसिद्धान्तो दूषणं न तु अन्येन स्वीकृतस्याऽपि त्यागे इति भावः ।

(३) न चैवमिति । अखण्डोपाधिनाऽनुगतव्यवहारोपपत्तौ गोत्वादिकमपि जातिर्न स्यादिति भावः ।

(४) तत्त्वानपायादिति । गोत्वादिजातेरपि अखण्डोपाधित्वाभ्युगमेनेष्टापत्तिरिति भावः ।

(५) नन्वेवमभावत्वमप्यखण्डोपाधिर्गोत्वादिकमपीति कोऽनयोर्विशेष इत्यत आह–अभावे इति ।

(६) समवायाभावादिति । प्रतियोगितानुयोगिताऽन्यतरसम्बन्धेन जात्यतिरिक्तप्रतियोगिकत्वविशिष्टसमवायाभावः अभाववृत्तिध-

ऽपि(१) तस्य कुतो नेष्यत इति चेन्न एतस्य वादान्तरत्वात् ।

(२)यत्तु तथा सति सादृश्यमप्यतिरिक्तं स्यादिति तन्न क्लृप्तेन निर्वहात् तदा तस्याप्यखण्डत्वमिष्टमेव । एतेन तादात्म्यस्यापि दर्शितः पन्थाः ।

किं चात्यन्ताभावत्वान्योन्याभावत्वादीनां दुर्वचत्वेन 'अन्यदात्मनोऽपश्यत्' 'यन्न दुःखेन सम्भिन्नम्' । 'अस्थूलं' 'नायमात्मा प्रवचनेन लभ्यः' 'अन्योऽन्तर आत्मा' इत्यादौ बोध एव न स्यात्, तस्माद्भेदत्वादिकमखण्डतत्त(३)द्व्यक्तिस्वरूपं तत्तत्पदवाच्यत्वं वाच्यत्वसम्बन्धेन तत्पदवत्त्वं वा यत्किंचिदस्तु किं तेन बोधस्तु तीर्थिकैरभ्युपगन्तव्य एव तन्निर्वचनं तु न बोधाङ्गम् तत्खण्डनं तु श्रीहर्षादेः शून्यतायामेव विश्राम्यति न वान्योन्याश्रयः प्रमेयत्वाभिधेयत्ववत् प्रमाणसिद्धत्वात् ॥

---

भेस्य जातित्वे बाधक इति बाधकसद्भावान्नाभावत्वस्य जातित्वं गोत्वे च जातित्वबाधकस्यासत्त्वात् जातित्वमपीति स्फुटं चैतन्मद्रचिते मुक्तावलीमयूखे इति ।

(१) ननु अभावे समवायः कुतो नाङ्गीक्रियत इत्याह—समवायोऽपीति ।

(२) ननु भेदत्वादिरूपाखण्डोपाधीनां सप्तपदार्थबहिर्भाववत् सादृश्यमप्यतिरिक्तः पदार्थः स्यादित्याह—यत्त्विति ।

(३) तत्तद्व्यक्तीति । घटपटादिव्यक्तिस्वरूपमेव भेदत्वम् । तत्पदेति । भेदपदवाच्यत्वं वाच्यतासंबन्धेन भेदपदवत्त्वं वा भेदत्वमितिभावः ।

## भेदपारमार्थिकत्वस्थापनम् ।

ननु (१)भेदस्य प्रत्यक्षादिसिद्धत्वेऽपि प्रातिभासिकत्वं स्याद्रङ्ग रजतादिवदिति चेत् , न उत्तरकालं बाधानवतारात् । तमो(२) नैल्यादेस्त्वन्मत इव स्यादिति चेद् , न मन्मतेऽन्यत्र प्रसिद्धनैल्यस्य तत्रारोपसम्भवादत्र भेदस्याप्रसिद्धत्वेन तदसम्भवात् प्रातिभासिकपदार्थे च मानाभावात् अनादिसिद्धभेदे तदसम्भवाच्च ॥

ननु व्यवहारक्षमं भेदं न निषेधामः किन्नाम तस्यानाविद्यकत्वं नह्याविद्यकत्वेप्युक्तपरस्पराश्रयादिदोषलेशोऽपि मायिकत्वेनोपपत्तेः माया हि परस्पराश्रितमपीन्द्रजालवद्दर्शयतीति चेद् , न घटघटत्वादीनां घटभूतलादीनां च परस्पराश्रयप्रसङ्गात् । मायिकत्वाविशेषेऽपि कस्यचिदेव परस्पराश्रितत्वं स्वभावादिति चेत् तात्त्विकत्वाविशेषेऽपि कस्यचित् स्वभावादेव तथास्तु अन्यथाऽभेदोऽपि न सिद्ध्येत् । अभेदत्वेप्यभेदसत्त्वेनानवस्थाद्यापत्तेः । नचाभेदस्याभेदत्वस्य च ब्रह्माभेदाभिन्नतया न दोष इति वाच्यं, पटाभेदस्य च ब्रह्माभेदरूपत्वाद्घटाभेदस्यापि तथात्वाद्घटपटयोरभेदापत्तेः ।

यदितु घटत्वादिना भेदो व्यावहारिकस्तस्य च मायिक-

---

(१) अद्वैतरत्नोक्तं भेदस्य प्रातिभासिकत्वं परिहर्तुमाशङ्कते-नन्विति ।

(२) ननु यथा तमो न नीलमिति बाधाभावेऽपि तमो नीलमिति प्रतीतेर्भ्रान्तित्वं तथा घटपटयोर्भेदबुद्ध्युत्तरं बाधाभावेऽपि भेदप्रतीतेर्भ्रान्तित्वमस्त्वित्याह-तमो नीलादेरिति ।

त्वान्नोक्तदोष इति तदा भेदाभेदयोस्तुल्यत्वाद्भेदे एव विद्वषोऽकारणक एव । तस्याताक्त्विकत्वे तु वक्ष्यामः ।

## जीवेशभेदप्रत्यक्षत्वम् ।

ननु मिथ्याभूतानां भेदोऽभेदश्च मिथ्याभूतोस्तु न वा, किन्तेन जीवेशभेदस्तु न सम्भवति मानाभावाल्लाघवादैक्यसिद्धेश्च, ईशस्याप्रत्यक्षत्वेन तद्धर्मिकस्य तत्प्रतियोगिकस्य वा भेद(१)स्याप्रत्यक्षत्वात्, (२)अनुमानं तु लाघवसहकृताभेदा(३)नुमानबाधितम्,

---

(१) अप्रत्यक्षत्वादिति । अभावप्रत्यक्षे अधिकरणप्रत्यक्षस्य प्रतियोगिप्रत्यक्षस्य च कारणत्वाभ्युपगमादिति भावः ।

(२) अनुमानं त्विति । आत्मत्वं नानाव्यक्तिनिष्ठं जातित्वात्पृथिवीत्ववत्, जीवः ब्रह्मप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणं ब्रह्मानुसंहितदुःखानुसंधातृत्वाद्यतिरेकेण ब्रह्मवत्, ब्रह्म जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणं जीवानुसंहितदुःखाननुसंधातृत्वात् व्यतिरेकेण जीववत्, घटःपटप्रतियोगिकतात्त्विकतादात्म्याधिकरणं न भवति प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नपटनिष्ठात्यन्ताभावप्रतियोगिधर्माधिकरणत्वाद् व्यतिरेकेण पटवदित्यादिभेदानुमानं त्वित्यर्थः आद्यमात्मनां परस्परं भेदस्य, द्वितीयं जीवधर्मिकेश्वरभेदस्य, तृतीयमीश्वरधर्मिकजीवभेदस्य, चतुर्थं घटपटादिभेदस्य साधकमिति बोध्यम्,

अत्र जीवब्रह्मप्रतियोगिकभेदयोः व्यावहारिक्या घटसत्तया सामानसत्ताकयोर्व्यावहारिकयोर्भेदयोर्घटे प्रसिद्धत्वान्नाप्रसिद्धविशेषणत्वम् । जीवब्रह्मणोश्च पारमार्थिकत्वात् तत्सत्तासमानसत्ताकत्वेन सिद्ध्यन् भेदः पारमार्थिक एव सिध्यतीति न सिद्धसाधनम् ।

(३) अभेदानुमानेति । विमता आत्मानः परमार्थतः परमात्मनो

(१)भेदश्रुतिस्तु लोकसिद्धकल्पितभेदानुवादिनी बलवदभेदश्रुति-विरोधात् कल्पि(२)तभेदेनान्यथोपपत्तेश्च नार्थापत्तिरिति चेद्—

न ईशगतजीवभेदस्याप्रत्यक्षत्वेऽपि जीवगतेशभेदस्य प्रत्यक्ष-त्वादन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यतायास्तन्त्रत्वात् अहं न सर्वज्ञो नाहं निर्दुःखो नाहं जगत्कर्तेत्याद्यनुभवात् । ईशगतजीव भेदस्तु ईशस्य प्रत्यक्ष एव ।

'तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप' इति ।

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति च भगवद्वचनात् ।

न(३) चान्तः करणावच्छिन्नचैतन्ये तदनवच्छिन्नचैतन्यप्रतियो-गिकभेदस्य प्रत्यक्षसिद्धत्वेऽपि न शुद्धे तद्भेदसिद्धिरिति वाच्यं, एकदैव तदवच्छिन्नत्वानवच्छिन्नत्वयोर्वि(४)रोधात् तत्रावच्छेदकस्याप्यभा-

---

न भिद्यन्ते आत्मत्वात्परमात्मवदित्यनुमानं त्वित्यर्थः ।

(१) भेदश्रुतिरिति । 'अन्यदात्मनोऽपश्यत्' 'अन्योऽन्तर आत्मा इत्यादिश्रुतिरित्यर्थः ।

(२)ननु 'अन्योऽन्तर आत्मा' इत्यादि श्रुत्यन्यथाऽनुपपत्त्याऽर्थाप-त्तिरेव भेदे प्रमाणमस्त्वत आह–कल्पितेति । कल्पितभेदमादायैव भेदश्रुतीनामुपपत्तिरिति न पारमार्थिकभेदसिद्धिरिति भावः ।

(३) नचेति । अन्तःकरणावच्छिन्नं चैतन्यं जीवः । मायावच्छिन्नं-चैतन्यं च ईश्वरः । ईश्वरप्रतियोगिकभेदो जीवस्य जीवप्रतियोगिक-भेदश्च ईश्वरस्य शुद्धचैतन्यप्रतियोगिकभेदो जीवनिष्ठो जीवस्य ईश-निष्ठश्चेशस्य प्रत्यक्षः परन्तु शुद्धचैतन्यनिष्ठो जीवभेदः ईशभेदो वा न कस्यापि प्रत्यक्षः शुद्धचैतन्यस्य भेदाधिकरणस्याप्रत्यक्षत्वात् भेदप्र-त्यक्षे चाधिकरणप्रत्यक्षस्य तन्त्रत्वादिति भेदासिद्धिरितिभावः ।

(४) विरोधादिति । शुद्धचैतन्ये अन्तःकरणावच्छिन्नचैतन्यभेदा

वात् । अहं नेदानीमानन्दवान् नाहमानन्द इत्यादि प्रत्यक्षाणामन्तः-करणानवच्छिन्नप्रतियोगिकभेदानवगाहित्वाच्च । इत्थं चाबाधिततादृश प्रत्यक्षविषयत्वाल्पज्ञत्वसंसारित्वादिहेतुकं जीवे ब्रह्मभेदानुमानमपि सुवचम् ।

न चैक्ये लाघवमतो बाधितमिदमिति (१)वाच्यम्, तत्तदन्तः-करणनाशेन तदवलम्बिभेदस्यापि (२)नाशात् अन्यथा तन्नाशे मानाभावात् ब्रह्मसाक्षात्कारस्य नाशकत्वकल्पने गौरवात् ।

न च भेदस्य स्वसमानाधिकरणत्रैकालिकनिषेधप्रतियो-गित्वमेव कल्पनिकत्वं न तु तन्नाशोऽतिरिक्तः कल्प्यते, ब्रह्मज्ञानं तु तद्भ्रमं निवर्तयतीति वाच्यं, तथापि भेदानन्त्या(३)परिहारात् । ऐन्द्रजालिकपदार्थवन्मायिकाऽनन्तपदार्थस्वीकारे का क्षतिरिति चेद् न, भेदस्यानादित्वेन मायिकत्वाभावात् ‘ इन्द्रजालस्थले तु तत्तन्मन्त्राणां प्रातिभासिकपदार्थजनकत्वं त्वन्मते न चैवं प्रकृते ।

---

भावे शुद्धचैतन्यमन्तःकरणावच्छिन्नं चैतन्यं चैकमेव स्यात् तथा च विरोध इति भावः ।

(१) वाच्यमिति । एतस्यानन्तरम्--“तयोरैक्ये विरुद्धधर्माश्रय-त्वानुपपत्तेः । नच अन्तःकरणाद्युपाधिकृतकल्पितभेदमादाय तदुप-पत्तिरिति वाच्यम्” इति पाठोऽपेक्षितः ।

(२) नाशादिति। तथाचान्तःकरणनाशेनैव मोक्षसिद्धौ तत्त्वज्ञानार्थं प्रयासो वृथा स्यादिति भावः ।

(३) अपरिहारादिति । भेदाधिकरणेऽपि अभेदसत्त्वे तयोर्विरोधा-भावेन भेदानन्त्यं स्यादेवेतिभावः ।

किं(१)च तादृशकाल्पनिकत्वेऽभावः परमतिरिच्यते न तु भेदहानिः । (२)प्रतियोगिना विरोधान्नैवमिति चेद् न, अ(३)विरुद्धाभावस्य त्वया साधितत्वात् व्यावहारिकभेदवत्त्वस्य त्वदभ्युपगतत्वाच्च ।

## श्रुतीनां भेदपरत्वस्थापनम् ।

इत्थं च श्रुतयोऽपि भेदं प्रतिपादयन्त्यो नान्यपरा बाधका(४)भावात् । तथाहि—

'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' ।

इत्यादयः साक्षादेव भेदं प्रतिपादयन्ति 'नित्योऽनित्यानां

---

(१) नन्विहाप्यविद्या प्रातिभासिकपदार्थजनिकेत्यत आह–किंचेति । अयंभावः स्वसमानाधिकरणत्रैकालिकनिषेधप्रतियोगित्वरूपं काल्पनिकत्वं भेदे भवतोऽभिमतं तथा च भेदाधिकरणेऽपि भेदोऽस्तीत्येवागतम् कपिसंयोगधिकरणेऽपि कपिसंयोगाभाववत् ततश्च भेदस्य हानिर्न जातेति ।

(२) ननु अभावस्य प्रतियोगिना सह विरोधाद् भेदाभावसिद्धौ भेदस्य हानिः स्यादेवेत्यत आह–प्रतियोगिनेति ।

(३) अविरुद्धाभावस्येति । भेदाधिकरणे भेदाभावस्य त्वयाङ्गीकारेण भेदस्य भेदाभावस्य च त्वया विरोधानङ्गीकारादिति भावः ।

(४) बाधकाभावादिति । नचाभेदप्रतिपादिकाः 'तत्त्वमसि' इत्यादिश्रुतयो बाधिका इति वाच्यम्, अभेदप्रतिपादकश्रुतीनां परस्परविद्वेषनिरासार्थकत्वस्य—

'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥

इति मन्त्रेण स्पष्टीकृतत्वेन उपचरितार्थास्ता न भेदश्रुतिबाधनक्षमा इत्यदोषात् ।

चेतनश्चेतनानाम्' 'य आत्मनि तिष्ठन्' 'सर्व एवात्मानः समर्पिताः' इत्यादौ इतरनित्येभ्य इतरचेतनेभ्यश्च प्रकर्षस्तत्त्वं तदीयत्वं च भेदं विना नोपपद्यते ।

अत एव—

'अन्यश्च राजन् प्रवरस्तथान्यः पञ्चविंशक' इति मोक्षधर्मः, 'उत्तमः पुरुषस्त्वन्य' इति भगवद्गीता च ।

न च प्रत्यक्षसिद्धभेदानुवादकत्वमत्र शङ्क्यम् , अजोऽन्य इत्यादिना ब्रह्मगतजीवभेदस्य प्रतिपादनात् तस्य चा(१)प्रत्यक्षत्वात् ।

न च जीवगतब्रह्मभेदस्य प्रत्यक्षसिद्धत्वात्तदन्यथानुपपत्तिसिद्धजीवभेदस्यापि प्रत्यक्षसिद्धत्वं परम्परयेति प्राप्तप्रतिपादकत्वादनुवादकत्वं श्रुतीनामिति वाच्यम्, एवं सत्यैक्यश्रुतेरप्यनुवादकत्वापत्तेः भेदप्रत्यक्षानुमानादिषु (२)कल्पितभेदपरत्वा-

---

(१) अप्रत्यक्षत्वादिति । एतेन-

'न द्वैतं प्रतिपादयन्त्युपनिषद्वाचः प्रसिद्धं हि तत् ।
किन्त्वद्वैतमनन्यगोचरतया तद्वेद्यमास्थीयताम्,

इत्यपास्तम् , ब्रह्मनिष्ठस्य जीवप्रतियोगिकभेदस्य अस्मदादिभिरनवगतस्य श्रुत्या प्रतिपादनसंभवात् ।

(२)कल्पितभेदपरत्वेति । नाहमीश्वर इति प्रत्यक्षस्य अनात्माहङ्कारशबलात्मविषयत्वेन न निरुपाधिकभेदे प्रामाण्यं किन्तु कल्पितभेदपरत्वम् । ननु अहङ्कारस्यानात्मत्वमेवासिद्धमिति चेन्न-अहङ्कारोऽनात्मा दृश्यत्वाद्घटवदित्यनुमानस्यैवाहङ्कारात्मनोर्भेदे मानत्वसंभवात् । न चेदमप्रयोजकम् , लाघवात् दृश्यत्वस्यानात्मत्वेन व्याप्तत्वादित्यलम् ।

(१)प्रयोजकत्वादिभिस्त्वया दूषितेष्वभेदस्यार्थापत्तिसिद्धत्वात् ,किं च

---

(१) अप्रयोजकत्वेति । भेदवादिनो हि जीवो ब्रह्मधर्मिकभेदप्रतियोगी ब्रह्मप्रतियोगिकभेदवान् वा पदार्थत्वात् असर्वज्ञत्त्वाद्वा घटवदित्यनुमानं जीवेश्वरयोर्भेदे मानमभ्युपगच्छन्ति तच्चव्यावहारिक भेदस्य वेदान्तिनाप्यङ्गीकारेण सिद्धसाधनादमानम्, न च स्वज्ञानाबाध्यभेदवत्वं साध्यं स्वज्ञानाबाध्यभेदश्च पारमार्थिक इति न सिद्धसाधनमिति वाच्यम् असत्यस्यापि व्यावहारिकस्यानिर्वचनीयस्य वा भेदस्य संसारिजीवज्ञानेनाबाध्यतया तथाविधस्य भेदस्य साधनेन सिद्धसाधनत्वस्यानुद्धारात् , नच पारमार्थिकभेदवत्त्वं साध्यमिति वाच्यम् पारमार्थिकभेदस्य वेदान्तिनाप्यनङ्गीकारेण घटादावपि व्याप्त्यभावेन व्याप्यत्वासिद्धेः । न च अनौपाधिकभेदवत्त्वं साध्यम् यत्र चाभेदः प्रामाणिकस्तत्र भेद औपाधिक इति स्थितिः घटपटादीनां चाभेदो न प्रामणिक इति तत्र भेदोऽनौपाधिक इति न साध्याप्रसिद्धिरिति वाच्यम् , नाहमीश्वर इति प्रत्ययस्यानात्माहङ्कारशवलात्मविषयतया तत्प्रत्यायभेदस्यौपाधिकत्वनिश्चयेन बाधाज्जडत्वस्योपाधित्वाच्चेति-एतदेवोक्तं भेदधिक्कारे–

'सिद्धसाध्यत्वतो भेदो व्याप्यत्वासिद्धितोऽथवा ।
बाधाज्जडत्वोपाधित्वान्नानुमानस्य गोचरः' इति ।

एवं श्रुतिरपि न भेदे प्रमाणं—

'मानान्तरप्रसिद्धत्वान्मिथ्यात्वादप्रयोजनात् ।
श्रुत्यन्तरविरोधाच्च न श्रुतिर्भेदगोचरा' इति ॥

एवं च भेदबोधकस्य प्रत्यक्षादेः कल्पितभेदपरत्वेन त्वया स्थापनात् अर्थात् अभेदः प्रत्यक्षादिभिर्बोध्यते तथा च अभेदबोधकश्रुतीनां प्रत्यक्षावगताभेदबोधकत्वेनानुवादकत्वं भवतोऽपि समानमिति भावः ।

प्रत्यक्षस्य प्रामाण्ये संवाद्यर्थप्रतिपादकत्वात् श्रुतेरपि प्रमाण्यं प्रयोजनाभावेऽपि अग्निर्हिमस्य भेषजमित्यादेः प्रामाण्यमिष्टमेव, अप्रमाण्ये तु नानुवादकत्वम् , अपि तु विप्रलम्भकत्वं अभेदे विद्यमानेऽपि दोषादग्रहो भेदग्रहश्च संभवति द्विचन्द्रवदित्यप्रामाण्यशङ्का कलङ्कितप्रत्यक्षपुरुषं प्रति भेदश्रुतेर्दार्ढ्यार्थत्वसंभवाच्च ।

अत एव श्रुतेस्तत्त्वावेदकत्वाद्भेदस्य बाध्यत्वमपि ।

अबाध्यत्वबोधकशब्दाभावान्नैवमिति चेत् , तत्त्वमसीत्यादि प्रतिपादिताभेदस्याबाध्यत्वमपि न श्रौतं स्यात् । अबाध्यत्वेनाप्रतिपादनेऽपि अबाध्यो योऽभेदस्तस्य वस्तुस्वरूपस्य प्रतिपादनान्नैवमभेदत्वादिकमपि वस्तुस्वरूपमिति चेद् , अबाध्यो भेद एव ब्रह्मस्वरूपः प्रतिपाद्यते भेदत्वादिकमपि तत्स्वरूपमेवेत्यस्यापि सुवचत्वात् । 'सत्यं भेदस्तु वस्तूनां स्वरूपं नात्र संशयः' इत्यनेन सत्यस्वरूपस्य ब्रह्मणः सकलवस्तुभेदरूपताप्रतिपादनात् ॥

## भेदस्यापरमार्थिकत्वखण्डनम् ।

युज्यते चैतद् भेदस्य व्यावहारिकत्वे मोक्षदशायां तत्प्रतिपादनविरोधात् । तथा 'विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती' त्यत्र मुक्तावपि भेदगर्भसाम्यबोधनात् आत्मत्वादिना साम्यस्य प्रागपि सत्त्वान्निर्दुःखत्वादिना साम्यबोधनाय परममिति ।

न च परमसाम्यमभेदः, (१)लक्षणापत्तेः अभेदस्य त्वन्मते

(१) लक्षणापत्तेरिति । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्यैव

प्रागेव सत्त्वात् प्रश्चात्प्राप्तिकथनानुपपत्तेश्च ।

पूर्वं सतोप्यभेदस्याज्ञानावृतत्वेनासत्कल्पतया फलतोऽज्ञान नाशप्राप्तिरेवोच्यत इति चेत् तथा बोधकशब्दाभावात् किं च विद्वानित्यनेन ज्ञानवत्ताबोधनात्तेन च पुण्यपापाज्ञानानां युगपन्नाशात्तदनन्तरं साम्यप्राप्तिकथनविरोधात् ।

न च प्राप्तिर्ज्ञानमेवेति युक्तं, स्वप्रकाशरूपस्य स्वतः सिद्धत्वाद् वृत्तिरूपस्य प्रागेव जातत्वात् ।

अत एव भगवतैवेदं व्याख्यातं व्यासेन स्मर्यते ।

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' ॥ इति
'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ।
पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्तेनामृतत्वमेति' ॥

इति भेदज्ञानस्य मोक्षहेतुत्वोक्तेश्च नहि काल्पनिकस्य ज्ञानमज्ञानं निवर्त्तयति,

न चेदं देहेन्द्रियादिविलक्षणात्मपरमितिवाच्म् , ईशस्य देहेन्द्रियाद्यात्मकताया अप्रसक्तेः इश्वरप्रेरितो गच्छेदित्यादिना ईश्वरस्य प्रेरकत्वोक्तेश्च । इत्थं च य आत्मनि तिष्ठन्नित्यादिप्रतिपादितसम्बन्धविशेषस्याभेदसमशीलनादैक्यश्रुतयोऽपि संगच्छन्ते ।

---

साम्यपदार्थतया साम्यपदस्याभेदपरत्वे लक्षणा स्यादिति भावः । साम्ये परमत्वं च सादृश्यप्रतियोगिगताधिकधर्मयोग एव नाभेदः अन्यथा भेदमुपैतीति किं न वदेत् ।

अत एव 'तत्स्थत्वाच्चानुपश्यन्ति एक एवेति साधव' इति मोक्षधर्मे याज्ञवल्क्यवचनम् ।

## भेदश्रुतीनां षड्विधतात्पर्यलिङ्गवत्त्वानिरूपणम् ।

(१)ननु षड्विधतात्पर्यलिङ्गवत्या अभेदश्रुतेर्बलवत्त्वाद्भेद-

---

( १ ) षड्विधतात्पर्येति । तात्पर्यग्राहकाणि लिङ्गानि—

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' ॥

इत्यभियुक्तोक्त्या षट् । तानि च जीवेश्वरयोरभेदे एव संभवन्ति । तथाहि--

छान्दोग्ये 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि' त्युपक्रमः,'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी' त्युपसंहारः, 'ऐतदात्म्यमि'त्यादिनवकृत्वोऽभ्यासः, प्रमाणान्तरानधिगतमद्वितीयब्रह्मात्मतत्त्वं प्रतिपाद्यत इत्यपूर्वता, 'आचार्यवान्पुरुषो वेद'इति 'तस्य तावदेवचिरं यावन्न विमोक्ष्ये' इति च निरतिशयपुरुषार्थावाप्तिर्ब्रह्मज्ञानफलम् , 'अनेन जीवेनात्मनाऽनुप्रविश्य' 'येनाश्रुतमि'त्यादि ब्रह्मण्यर्थवादः, मृल्लोहतप्तपरशुग्रहणदृष्टान्तैः स्वपितिनामनिर्वचनेन सृष्टिस्थितिसंहारैश्च ब्रह्मात्मैकत्वस्योपपत्तिः ।

तथा तैत्तरीयकेऽपि--'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युपक्रमः, 'स यश्चायं पुरुषे यश्चासावादित्ये स एक' इत्युपसंहारः, 'सच्च त्यच्चाभवद्यदिदं किंच' 'तदात्मानं स्वयमकुरुत' 'यतो वाचो निवर्तन्ते' इति चाभ्यासः, एभिश्च प्रमाणान्तरेणानधिगतं ब्रह्मतत्त्वं प्रतिपाद्यत इत्यपूर्वता, 'सर्वान् कामान् समश्नुते' इति फलम्, सृष्टिश्रुतिभिश्चाद्वितीयब्रह्मात्मकत्वमुपपाद्यते इत्युपपत्तिः । इति जीवब्रह्मणोरभेदे तात्पर्यनिर्णायकषड्विधप्रमाणसत्त्वाच्छ्रुतीनां तत्रैव प्रामाण्यमिति भावः ।

श्रुतयो बाध्यन्त इति चेन्न—भेदश्रुतीनामपि तथात्वात् ।

तथाहि—आथर्वणे द्वा सुपर्णेत्युपक्रमः, परमं साम्यमुपैतीत्युपसंहारः, तयोरन्यः अनश्नन्नन्यः अन्यमीशमित्यभ्यासः, ईश्वरसंबन्धिभेदस्य कालत्रयाबाध्यस्य शास्त्रं विनाऽप्राप्तेरपूर्वता, पुण्यपापे विधूयेति फलम्, अस्य महिमानमितीति स्तुतिरूपोऽर्थवादः, अत्ति अनश्नन्नित्युपपत्तिः ।

द्विशब्दस्य (१)भेदवाचित्वात्तदा(२)क्षेपकत्वादैक्य(३)विरोधित्वाद्वा संभवति भेदविषयकत्वं 'मायामात्रमिदं द्वैतमि'तिवत् । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यं तु भेदगर्भं नायं सः किन्तु तत्सदृशः नायं तत्सदृशः किन्तु स एवेति प्रतीतेः 'गगनं गगनाकारमि'ति तु सदृशवस्त्वन्तरनिषेधपरम् । गगनस्य जन्यत्वे तु गगनान्तरसादृश्यमपि सुवचम् । अन्यमीशमिति (४)प्रकृतो जीव

---

( १ ) भेदवाचित्वादिति । 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' इति श्रुतौ द्विशब्दस्य भेदार्थकत्वदर्शनाद्द्विशब्दस्यभेदवाचित्वमिति भावः ।

( २ ) तदाक्षेपक इति । स्वप्रतियोगिवृत्तित्व स्वानुयोगिवृत्तित्वोभयसंबन्धेन भेदविशिष्टस्यैव द्वित्वरूपतया भेदाक्षेपकत्वम् । अत एव 'तिस्र आहुतीर्जुहोती' त्यादौ संख्यया कर्मभेद इति भावः ।

( ३ ) ऐक्यविरोधीति । अत एव 'न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते' इति दृष्टान्तेन पूर्वसंख्याया उत्तरसंख्यया बाध इति महाभष्योक्तं संगच्छते ।

( ४ ) प्रकृत इति । यथा 'सप्तमं पदमध्वर्युरञ्जलिना गृह्णाती' त्यादौ श्रुतस्य पदस्य संबन्ध्याकाङ्क्षायामेकहायन्या सोमं क्रीणातीत्य

एवात्र प्रतियोगी लभ्यते इत्यभ्यासेऽपि भेदविषयकत्वम् ।

## अभेदश्रुतीनां षड्विधतात्पर्यलिङ्गवत्त्वभङ्गः ।

नन्वाथर्वणप्रथममुण्डके 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'ति शौनकप्रश्नानन्तरं 'द्वे विद्ये वेदितव्ये' इति विद्याद्वयमवतार्य्य ऋग्वेदा(१)दिलक्षणामपरामुक्त्वा अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमित्यादिना परविद्याविषयमक्षरं प्रश्नानुसारेण प्रतिपादयता अभेदस्यैवोपक्रान्तत्वात्, द्वितीयमुण्डके 'पुरुष एवेदं विश्वं' 'ब्रह्मैवेदं विश्वमिदं वरिष्ठमि'तिमध्ये परामर्शः, तृतीयमुण्डके च 'परेऽव्यये सर्व एकीभवन्ति' 'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवती'त्यैक्यलक्षणफलेनोपसंहाराच्च (२)महाप्रकरणस्यैक्यपरत्वे स्थिते तद्विपरीततात्पर्य्यकल्पनायोगात् परमसाम्यमैक्य(३)मेव । इत्थं चाभ्यासोपपत्ती काल्पनिकभेदपरे, भेदस्य प्रत्यक्षेण तत्तुल्यप्रमाणेन वा (४)प्राप्तत्वान्नापूर्वत्वं फलार्थ-

---

नेनोपस्थिताया एकहायन्यास्तत्त्वेन यथा संबन्धस्तथा पश्यतीत्यनेन उपस्थितस्य जीवस्य भेदप्रतियोगित्वमिति भावः ।

(१) ऋग्वेदादीति । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति ।

(२) महाप्रकरणस्येति । मुण्डकोपनिषद्रूपस्येत्यर्थः ।

(३) ऐक्यमेवेति । तथा च परमं साम्यमुपैतीत्यस्य न भेदोपसंहारत्वमिति भावः ।

(४) नापूर्वत्वमिति । ईशस्य शास्त्रगम्यत्वेन तत्प्रतियोगिकस्य तदनुयोगिकस्य वा भेदस्य अपूर्वत्वमिति तु न ईशज्ञानमात्रे शास्त्रस्यापेक्षितत्वेऽपि प्रत्यक्षेणानुमानेन वा तयोः प्राप्तत्वादिति भावः ।

वादावैक्यपक्षेऽप्यविरुद्धाविति चेन्न—

कस्मिन्नु भगव इत्यादावभेदाप्रतिपादनात् नहि एकवचनेन प्रश्नादेवाभेदः प्रतीयते तथाशब्दाभावात् को भवतः पुत्र इत्युक्ते एते पञ्चेत्याद्युत्तरे (१)तथात्वादर्शनात् प्रकृतेऽपि विद्याद्वयज्ञानेनोत्तरेण बाधात् तेन नोपक्रमोऽभेदविषयः। किंच उपक्रमे जीवोपस्थापकाभावादभेदः सर्वैः सह वक्तव्यः स च जन्यजनकभावादेव अन्यथा नित्यानित्ययोरभेदासंभवात् न तु जीवो जन्य(२)स्तीर्थकैरुपेयते येन तदभेद उपक्रान्तः स्यात्। एवं 'पुरुष एवेदम्' इत्यत्रापि 'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतमि'ति स्पष्टमेव तथा प्रतिपादनात्। ब्रह्म वेदः। एवं ब्रह्मैवेदमित्यत्रापि 'ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठमि'ति स्पष्टमेवोक्तेः।

एकीभावोऽपि साम्येनैव 'एकीभूता नृपाः सर्वे' इतिवत्।

'परेऽव्यये सर्व (३)एकीभवन्ति' इत्यनेन—

---

(१) तथात्वेति। प्रश्नवाक्यस्थैकवचनानुरोधेनाभेदप्रतिपादने अत्रापि पञ्चानां पुत्राणामभेद एव स्यात् स च नेष्ट इतिभावः।

(२) तीर्थकैरिति। यत्तु—'प्रधानपुंसोरजयोः कारणं कार्यभूतयोः' इति वचने कार्यभूतयोरिति विशेषणाज्जीवस्य जन्यत्वमिति तन्न तादृशवचनस्य शरीरवैशिष्ट्येन जीवस्य जन्यत्वपरत्वात्।

(३) एकीभवन्तीति। अत एव 'अभूततद्भावे च्विरिति वक्तव्यम्' इति कात्यायनस्मरणबलेन 'कृभ्वस्तियोगे संपद्यकर्तरि च्विरि'ति सूत्रेण अभूततद्भावे च्विः। 'रामसुग्रीवयोरैक्यं देव्येवं समजायत' इति वाल्मीकिप्रयोगात्—

'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान् नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्' ॥
इत्यनेन च तथैव प्रतीतेः ।

इत्थं च ब्रह्मैव भवतीत्यस्य साम्ये पर्य्यवसितताऽविभागलक्षणोऽभेद एवार्थः सकलप्रकरणानुरोधात् 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथे' त्यनेन तु प्रधानस्य तस्यात्मनो ज्ञानवार्त्तान्तरनिषेधश्च बोध्यते 'एषोऽन्तश्चरते बहुधाऽजायमान' इत्यस्याजायमानोऽन्तर्यामी सर्वेषामिति स्पष्ट एवार्थ इति न काप्यनुपपत्तिः ।

## भेदश्रुतीनां पुनस्तात्पर्यषड्विधलिङ्गवत्त्वनिरूपणम् ।

एवं श्वेताश्वतरोपनिषदि—

(१)'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोन्य' इत्युपक्रमः, जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक' इत्युपसंहारः, द्वासुपर्णा तयोरन्यः अनश्नन्नन्य इत्यभ्यासः, त्रिकालाबाध्यभेदस्यान्यतोऽप्रतिपत्तेरपूर्वता, वीतशोक इति फलं,

---

'एकोऽन्यार्थेप्रधाने च प्रथमे केवले तथा ।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते ॥'

इति कोशाच्च एकशब्दस्य साम्यपरत्वदर्शनादपि एकीभवन्तीत्यस्य साम्यपरत्वं द्रष्टव्यम् ।

( १ ) अज इति । अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । इति मन्त्रस्य पूर्वार्धः । अनुशेते पश्चात्तापमुपैतीत्यर्थः ।

महिमानमित्यर्थवादः, अत्ति अनश्नन्नित्युपपत्तिः । एवं तत्रैव प्रथमेऽध्याये पृथगात्मानं प्रेरितारं च मत्वेति अनीशश्चात्मा बध्यते ज्ञाज्ञौ द्वावजावीशानीशाविति, द्वितीये यदात्मतत्त्वेन तु ब्रह्मतत्त्वम्, तृतीये यस्मात् परन्नापरमस्ति किंचिदित्यनेन यतो भिन्नं श्रेष्ठं नास्तीति प्रतिपाद्यते, चतुर्थे तु अजो ह्येक इत्यादीनि, पञ्चमे विद्याऽविद्ये ईशते यस्तु सोऽन्यः, फलकर्मभोक्तेत्यारभ्य आराग्रमात्रो ह्यवरोऽपि दृष्टः तेषां संयोगहेतुरपरोऽपि दृष्टः, षष्ठे परोऽन्यो यस्मात् प्रपञ्चः परिवर्त्ततेऽयमिति । मोक्षधर्मे—

'अजौ नित्यावुभौ प्राहुरध्यात्मगतिनिश्चयात् ।
यदा तु पश्यतेऽन्यं तमहन्यहनि काश्यप ।।
तदा स केवलीभूतः षड्विंशमनुपश्यति' ।

'अश्वमेधिके

'पृथग्भावश्च विज्ञेयः सहजश्चापि तत्त्वतः' ।
इत्यनेन पृथग्भावस्य तात्त्विकत्वमुक्तम् ।

## भेदाभेदश्रुत्योर्विरोधाभावोपपादनम् ।

नन्वेवं भेदाभेदश्रुत्योस्तुल्यबलत्वे विरोधः स्यात् वस्तुनि विकल्पाभावात्, प्रतिपादयन्ति च 'ब्रह्मैव सन् ब्रह्माप्येति' 'अयमात्मा ब्रह्मे'त्यादि श्रुतयोऽभेदमिति चेत्—ब्रह्म ब्राह्मणः सन् साधुरित्यर्थः । ब्राह्मणा विविदिषन्ति ब्राह्मणो निर्वेदमायादित्यादिश्रुतेः ।

## ब्राह्मणस्यैव मुक्तिः ।

(१)भक्ता राजर्षयस्तथेत्यादिकं त्वर्थवादमात्रम्-

स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।
अपि वर्णावकृष्टस्तु नारी वा धर्मकाङ्क्षिणी ॥
तावप्येतेन मार्गेण गच्छेतां परमां गतिम् ।

(२)इत्यादिवत्, यो देवानां प्रत्यबुध्यत स एव तदभवदित्यादीनामपीयमेव (३)गतिः ।

वस्तुतो देवानामपि (४) ब्राह्मणत्वाविरोधात्

---

(१) ननु ब्राह्मणा विविदिषन्तीत्यादि श्रुत्या ब्राह्मणस्यैव मुक्तिरित्यर्थस्य लाभेन भक्ता राजर्षय इत्यादिना क्षत्रियस्य मुक्तिप्रतिपादनमसङ्गतमित्यत आह-भक्ता इति । तथा चास्यार्थवादत्वेन भक्तिप्रशंसामात्रपरत्वेन स्वार्थपरत्वाभावान्न दोषः । अत एव ब्राह्मणस्यैव संन्यासेऽधिकार इति प्रतिपादितं शास्त्रसिद्धान्तलेशादौ ।

(२) इत्यादिवदिति । यन्मते त्रैवर्णिकसंन्यासस्तन्मतेऽपि शूद्रादीनां न मोक्ष इत्यभ्युपगमेन स्त्रियो वैश्या इत्यादिवचनस्यार्थवादत्वं कल्पनीयं तद्वदित्यर्थः ।

(३) गतिरिति । देवानां ब्राह्मणत्वाभावादिति भावः ।

(४) ब्राह्मणत्वाविरोधादिति । ब्राह्मणस्य विशुद्धब्राह्मणब्राह्मणीजन्यत्वनियमेन सर्गाद्युत्पन्नस्य ब्राह्मणत्वाभावात् उत्तरकालेऽपि ब्राह्मणव्यवहारो न स्यादतः अदृष्टविशेषसहकृतैः परमाणुभिरेव सर्गादिकाले ब्राह्मणशरीरमुत्पद्यते तदुत्तरकाले तु ब्राह्मणब्राह्मणीजन्यमेवेति निरूपितं कुसुमाञ्जलौ तद्वत् अदृष्टविशेषसहकृतैर्ब्राह्मणशरीरारम्भकपरमाणुभिरेव देवशरीरमुत्पद्यते इति तस्य ब्राह्मणत्वे बाधकाभाव इति भावः ।

(१)नानुपपत्तिः । यथा बृहस्पतिप्रभृतीनां मघवदादीनामुपदेशस्तु जन्मान्तरे उपकरिष्यति विदुरादिवत् ।

कीटादीनां काशीमरणेनायोनिजं ब्राह्मणशरीरमुत्पाद्य मोक्षो जन्यते 'मुमूर्षोर्दक्षिणे कर्णे' इति तु न यथाश्रुतम् । मुमूर्षाऽसम्भवात् तथा च मरणप्राक्कालीनो लक्षणीय इति मरणोत्तरकालीन एव कुतो न लक्ष्यते(२)।

अत एव मनुरप्याह 'ब्राह्मणः प्रव्रजेद् गृहात्, एवं द्वादशेऽप्यध्याये नैश्रेयसं कर्मविधिं प्रशस्येमं निबोधतेत्युपक्रम्य—

'एतत्तेऽभिहितं सर्वं नैश्रेयसकरं परम् ।
अस्मादप्रच्युतो विप्रः प्राप्नोति परमां गतिम्' ॥

इत्युपसंहरतिस्म ।

(३)अयमात्मा ब्रह्मेति तु माण्डूक्योपनिषदि प्रणवाभेदभावं वदति तत्र ब्रह्मशब्दस्य प्रणववाचित्वात् । ओमित्येतदक्षरमिदं सर्वमिति सर्वं ह्येतद्ब्रह्म अयमात्मा ब्रह्मेत्युक्त्वा अकारोकारमकारे-

---

(१) यथेति । यथेत्यस्य स्थाने--यद्वा 'देवानां स्वयंप्रतिभातवेदत्वात् ब्राह्मणत्वाभावेऽपि उपनयनादिसंस्काराभावेऽपि तेषाम्ब्रह्मज्ञानसंभवः' इति पाठोऽपेक्ष्यते । ननु तेषां स्वयंप्रतिभातवेदत्वे श्रुतौ इन्द्रादीनां गुरूपसदनप्रतिपादनमनर्थकमत आह-बृहस्पतीति ।

(२) लक्ष्यते इति । तथाच लक्षणाया अवश्यकरणीयतया मरणोत्तरकाललक्षणामङ्गीकृत्य अयोनिजब्राह्मणशरीरं प्राप्यैव मुक्तो भवतीति कल्पनैव युक्तेति भावः ।

(३) ननु अयमात्मा ब्रह्मेतिश्रुत्या जीवब्रह्मणोरभेदः प्रतिपाद्यते इति कथं तयोर्भेद इत्याशङ्कां परिहरति-अयमात्मेति ।

षु स्वरूपतया (१)विश्वतैजसप्राज्ञतुरीयभावनं दर्शयित्वो-

(१) विश्वेति । तथाच माण्डूक्योपनिषद्—

जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राऽऽप्तेरादित्वाद्वा आप्नोति ह वै सर्वान् कामानादिश्च भवति य एवं वेद ॥१॥ स्वप्नस्थान स्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वोत्कर्षति ह वै ज्ञानसंततिं समानश्च भवति नास्याब्रह्मवित्कुले भवति य एवं वेद ॥ २ ॥ सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ॥ ३ ॥ अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद य एवं वेद ॥ ४ ॥ इति ॥

अयमर्थः—जागरितं स्थानं यस्य स जागरितस्थानः विश्वश्चासौ नरः विश्वानरः स एव वैश्वानरः, प्रथमा मात्रा ॐकारस्याद्यमात्रारूपः अकारसञ्ज्ञकः, अकारवैश्वानरयोरभेदहेतुं साम्यमाह—आप्तेः व्याप्तेरित्यर्थः; 'अकारो वै सर्वा वाक्' इति श्रुतेः अकारो व्यापकः वैश्वानरोऽपि सप्ताङ्गत्वाद्व्यापकः, हेत्वन्तरमाह—आदिमत्त्वाद्वेति । अकार उकाराद्यपेक्षयादिमान् वैश्वानरोऽपि तैजसाद्यपेक्षयाऽऽदिमानिति भावः ॥ १ ॥ उकारतैजसयोरभेदहेतू साम्ये आह—उत्कर्षादुभयत्बाद्वेति । उकारस्याकारादूर्ध्वं पाठेनोत्कर्षः तैजसस्य तु विश्वात्सूक्ष्मत्वेनोत्कर्ष इति तयोः साम्यम् उभयत्वात् विश्वाकाराभ्यां तैजसोकारयोर्द्वितीयत्वात् निगदव्याख्यातमन्यत् ॥ २ ॥ मकारप्राज्ञयोरभेदहेतू साम्ये आह—मितेरपीतेर्वेति । मितेः—यथा यवाः प्रवेशनिर्गमाभ्यां प्रस्थपरिमितपात्रेण मीयन्ते तथा विश्वतैजसावपि लयोत्पत्तिभ्यां प्राज्ञेन मीयेते ओंकारसमाप्तावकारोकारौ मकारे प्रविष्टाविव भवतः पुनरोंकारोच्चारणे कृते निर्गताविव च लक्ष्येते, अपीतेः—अपीतिर्नाम स्वस्मिन्नेकीभावः ॐकारस्योच्चारणेऽकारमकारावन्तिमाक्षरे मकारे एकीभूताविव लक्ष्येते तथा वैश्व

प(१)संहरति ।

'यु(२)ञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥
ॐकारो विदितो येन स मुनिर्नेतरो जनः ।' इति ॥
'एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' ॥

'इत्यनेन पूर्वापर(३)शरीरसम्बद्ध एक एवात्मा प्रतिपाद्यते स एक एव व्यवस्थितः बहुधा दृश्यते च जलचन्द्रवत् भ्रमादेव

---

तैजसावपि सुषुप्तिकाले प्राज्ञे एकीभूताविव भवतः स्पष्टमन्यत् ॥३॥ अमात्रः अकारादिमात्राहीनः ॐकारः प्रणवः चतुर्थः तुरीयः आत्मैव विज्ञेयः इति शेषेणान्वयः अमात्रपदेनोङ्कारस्य कथनादोङ्कारार्धमात्रयोरभेदो गम्यते, अव्यवहार्यः—अर्थक्रियाशून्यः, प्रपञ्चोपशमः प्रपञ्चस्य उपशमो यस्मिन्सः, शिवः--परमानन्दस्वरूपः, अद्वैतः--भेदरहितः, एवमुक्तप्रकार ओङ्कार आत्मैवेत्यर्थः ॥ ४ ॥

(१) उपसंहरतीति । उक्तश्रुतिभिः आत्मनः प्रणवाभेदोपासना विधीयते न तु जीवब्रह्मणोरैक्यमिति न जीवब्रह्मणोरभेदसिद्धिरिति भावः ।

(२) प्रणवस्य ब्रह्मपदवाच्यत्वे स्मृतिमप्याह--युञ्जीतेति ।

(३) एवं जीवेश्वरभेदसिद्धावपि भूते भूते देवदत्तयज्ञदत्तादिशरीरे एक एवात्मा व्यवस्थितः इत्यर्थकवचनात् आत्मनां परस्परंभेदो न सिध्येदिति शङ्कां निरस्यति--पूर्वापरेति । तथाच देवदत्तयज्ञदत्तशरीरात्मनोर्नैक्यप्रतिपादकमिदं वचनं किन्तु अवस्थाभेदेन देवदत्तशरीरस्य भिन्नत्वेऽपि आत्मैक्यप्रतिपादनपरम् तथाचात्मनां परस्परं भेदे बाधकाभाव इति ।

नानाशरीराभेदेन ज्ञायते मनुष्योऽहं व्याघ्रोऽहं देवोऽह-मित्यादि एकस्मिन्नेव जन्मनि स्वप्ने नानाशरीरभ्रमाद् बाल्यादि-भेदेन नानाशरीरेषु चाहं बुद्धिर्भ्रमाज्जलचन्द्रवत् यथा एक एव जलचन्द्रस्य जलप्रसङ्गे नानाप्रकारो दृश्यते यथा वा एक एव चन्द्रो जलसम्बन्धान्नानास्वरूपो दृश्यते तथैवेत्यर्थः । एवं (१)का-यव्यूह स्थलेऽपि द्रष्टव्यम् ।

## अवस्थाभदेने शरारभेदेनिरूपणम् ।

यत्तु बाल्यादिभेदेन देहभेदो न (२)प्रामाणिकः प्रत्युत योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थाविरे प्रणप्तॄननुभवामीत्यभेद एवा-नुभवसिद्ध इति, तन्न अवयवोपचयापचयैरवयविनाशोत्पादयोरवश्या-भ्युपेयत्वात् ।

नचारम्भवादः प्रति(३)भामात्रकल्पितो न शास्त्रसिद्ध इति वाच्यं 'भूतानि योनिरि'ति श्रुत्या भूतकारणत्वोक्तेः ।

न च (४)संयोग एषां न त्वात्मभावादित्यनेन दूषितमिति वा-

(१) कायव्यूहेति । योगिनो हि युगपदेव नानाशरीराणि कल्प-यन्ति स एव कायव्यूह इत्युच्यते ।

(२) प्रमाणिक इति । तथा च देवदत्तयज्ञदत्तादिशरीरेष्वैक्य-प्रतिपादिकैव 'एक एव ही' त्यादिश्रुतिरिति निगूढोऽभिप्रायः ।

(३) प्रतिभेति । कल्पनेत्यर्थः ।

(४) न च संयोग इति । अणोरण्वन्तरेण व्याप्यवृत्तिसंयोगा-ङ्गीकारे आत्मभावः अणुमत्रात्वापत्तिरतोऽण्वोःसंयोगो न संभवती-त्यर्थः । तथा च शाङ्करभाष्यम्—'सर्गकाले वायवीयेष्वणुष्वदृष्टापेक्षं

च्यम्, आत्मभावेनैव कारण(१)त्वनिषेधात् ।

कर्मोत्पद्यते तत्कर्म स्वाश्रयमणुमण्वन्तरेण संयुनक्ति ततो द्व्यणुकादिक्रमेण वायुरुत्पद्यते एवमग्निरेवमापः एवं पृथिवी एवमेव शरीरं सेन्द्रियमिति सर्वमिदं जगदणुभ्यःसंभवति अणुगतेभ्यश्च रूपादिभ्यो द्व्यणुकादिगतानि रूपादीनि संभवन्तीति काणादाः, न चतद्युज्यते संयोगश्चाणोरण्वन्तरेण सर्वात्मना स्यात् एकदेशेन वा सर्वात्मना चेदुपचयानुपपत्तेरणुत्वप्रसङ्गः दृष्टविरोधश्च प्रदेशवतां द्रव्यस्य प्रदेशवता द्रव्यन्तरेण संयोगस्य दर्शनात् एकदेशेन चेत्सावयवत्वप्रसङ्गः, परमाणूनां कल्पिताः प्रदेशाः स्युरिति चेत् कल्पितानामवस्तुत्वात् अवस्त्वेव संयोग' इति । तथाचारम्भवादासंभव इति भावः ।

(१) कारणत्वनिषेधादिति । आत्मभावेन अणुमात्रत्वापत्त्यैव कारणत्वनिषेधः न चैत्संभवति 'नहि दृष्टेऽनुपपन्नंनाम' इति न्यायादिति भावः ।

जगतः परमाणवः समवायिकारणं तत्संयोगश्चासमवायिकरणम् ईश्वरः जीवादृष्टं च निमित्तकारणम् । नच परमाणनां निरवयवत्वादव्याप्यवृतिसंयोगासंभव इति वाच्यम्, तत्र व्याप्यवृत्तिसंयोगस्याङ्गीकारात् । तत्तद्देशस्यावच्छेदकत्वसंभवेनाव्याप्यवृत्तिसंयोगस्यापि परमाणौ संभवाच्चेति गागाभट्टाः ।

अमुमेवार्थं न्यायरत्नराखालदासमहोदया अपि अद्वैतवादखण्डने प्रत्यपीपदन् तथाहि—'अव्यक्तादीनि भूतानीति गीतया, स य एषोऽणिमेत्युपनिषदा, महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यामिति ब्रह्मसूत्रेण, च परमाणुसत्ताया अवगमात् महर्षिभिः काणादैरक्षपादैश्च परमाणुषु द्रव्योपादानतयाः स्वीकारात् निरवयवद्रव्येष्वपि द्रव्यासमवायिकारणीभूतः संयोगोऽङ्गीकृतः अन्यथा परमाणुस्वीकारवैफल्यापत्तिः एवं च दिग्विशेषावच्छिन्नसंयोग एव कार्यमर्जयति न तु तत्रां

(१)अत एव 'यः कारणानि कालात्मयुक्तान्यधितिष्ठत्येक' इत्यनेन तेषां हेतुत्वमनुमतम् ।

'पार्थिवोऽयं तथा देहः पार्थिवैः परमाणुभिः',

इति विष्णुपुराणमपि, एवं अवयवनाशोत्पत्या अवयवि नाशोत्पत्तिरपि दर्शिता ।

मोक्षधर्मे—

'कौमाराद्यौवनं याति स्थाविर्य्यं चापि यौवनात् ।
अनेन क्रमयोगेन पूर्वं पूर्वं न लभ्यते ॥
कलानां पृथगर्थानां प्रतिभेदः क्षणे क्षणे ।
वर्त्तते सर्वभूतेषु सौक्ष्म्यात्तु न विभाव्यते ॥
न चैषामत्ययो राजन् लक्ष्यते प्रभवो न च ।
अवस्थायामवस्थायां दीपस्येवार्चिषो गतिः ॥' इति ।

उक्तप्रत्य(२)भिज्ञा त्वात्मनोऽभेदमेव(३) विषयीकरोति ।

---

शविशेषावच्छिन्नत्वमपिनियामकम् ।

यस्तु दृष्टद्रव्यसंयोगेष्वंशविशेषा वच्छिन्नेष्वेव द्रव्यजनकत्वं दृष्ट्वाऽतीन्द्रियस्थले तादृशसंयोगासंभवेन तेषु द्रव्यजनकत्वं न संभवतीति सुतरां परमाण्वसिद्धिरिति मन्यते सोऽन्यत्राद्दृष्टं ब्रह्मणो जगदुपादानत्वं कथं निश्चिनोतीति प्रष्टव्य"इति ।

(१) अतएवेति । कारणानि परमाण्वादीनि कालात्मसंयुक्तानि अधितिष्ठति ईश्वरः इत्यर्थात्परमाणोः कारणत्वसिद्धिरिति भावः ।

(२) उक्तप्रत्यभिज्ञेति । योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थाविरे प्रनप्तॄननुभवामि इति प्रत्यभिज्ञेत्यर्थः ।

(३) अभेदमेवेति । एवकारेण शरीराभेदो व्यवच्छिद्यते ।

ननु योऽहं (१)बालो धूलिधूसरोऽभवं सोऽहं जराजीर्णोऽस्मीति प्रत्यभिज्ञायाः का गतिरिति चेद्, भ्रान्तिस्तदवच्छिन्नात्माभेदविषयिणी वास्तु योऽहं व्याघ्रो वनान्तमभ्रमं सोहं मनुष्यो वेदपारग इतिवत् ।

न च 'भूते भूत' इति वीप्साबाधः कथमिति वाच्यम्, पाषा-(२)णेऽपि तया आत्मव्यवस्थातृत्वस्य तथाभावप्रसङ्गात् । अस्त्येव तत्रापि स(त)त्सम्बन्ध इति चेत्, तर्हि मन्मतेऽप्यस्त्येवात्मनो विभुत्वात् 'सर्वगतं विभुत्वात्, इत्युक्तेश्च ।

## अद्वैतश्रुतीनां भेदवादाविरोधित्वोपपादनम् ।

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, इत्यादौ च ब्रह्मणः (३)प्राधान्यम्, द्वितीयस्य तुच्छत्वं तु न श्रुत्या प्रतिपाद्यते 'एक एवायमद्वितीयः ईश्वरः, इतिवत् । 'अतोन्य(४)दार्त्त' मित्यनेनापि तथैव प्रतीतेः। 'तत्त्वमसि' इत्यादेः का गतिरितिचेत्, अकार(५)प्रश्लेषात्,

---

(१) योऽहं बाल इति। इयं प्रत्यभिज्ञाबाल्यवार्धक्ययोः शरीरैक्यसाधिका शरीरभेदे सा नोपपद्येत इति भावः ।

(२) पाषाण इति । वीप्सया भूतत्वावच्छेदेनात्मसंबन्धप्रतिपादने पाषाणेऽपि आत्मनः सत्त्वप्रसङ्ग इतिभावः ।

(३) प्राधान्यमिति । प्रतिपाद्यत इति शेषः ।

(४) आर्तं-दीनम् । आर्तो जिज्ञासुरर्थार्थीत्यादौ तथादर्शनात् । एवं च इयमपि श्रुतिर्न ब्रह्मान्यस्य मिथ्यात्वबोधिकेति भावः ।

(५) अकारप्रश्लेषादिति। 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति श्रुतौ आत्मातत्त्वमित्यत्र

त्वशब्दस्य भिन्नार्थत्वेन(१) वोपपतिरित्येके । 'तत्सत्यं स आत्मा-तत्त्वमसीत्यत्र तत्पदेन सत्यपरामर्शात्सत्यं त्वमसीत्यर्थो न विरुद्धः ।

## अविभागलक्षणाभेदस्यैव श्रौतत्वनिरूपणम् ।

वस्तुतस्तु (२)अविभागलक्षणोऽभेद एव तत्रार्थः सचाखण्ड एव न तु भेदाभावः । स च तदीयत्वेन तत्साम्येन तज्जन्यत्वादिना च प्रतीयते । अत एव ऐतदात्म्यमित्यनेनैतदात्मसम्बन्धोऽभ्यस्यते । अत एव च 'सन्मूलाः सोम्येमाः प्रजाः सदायतना, इत्युक्तम् ।

विविच्याग्रहणाद्बहुतरवैधर्म्यविरहाच्च (३)तथोच्यते 'ते(४)य-

---

आत्मा अतत्त्वमितिच्छेदेन तद्भिन्नस्त्वमसीत्यर्थान्न जीवपरयोरैक्ये प्रमाणमिति भावः ।

(१) भिन्नार्थकत्वेनेति । तथाच भट्टोजिदीक्षितः 'त्व त्व इति द्वावप्यदन्तावन्यपर्यायौ' इत्याह ।

(२) अविभागलक्षणः--अपार्थक्यलक्षणः । राजकीये पुरुषे 'राजाऽसौ' इत्यत्र तदीयत्वेन, 'सिंहो माणवक' इत्यत्र साम्येन, 'मृद्घट' इत्यत्र 'आत्मा वै जायते पुत्र' इत्यत्र 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिः ह्रीर्धीर्भीरित्येतत्सर्वं मन एव इत्यत्र च जन्यत्वेन, अपार्थक्यं प्रतीयते इति ।

(३) तथोच्यते इति । अभेद उच्यते इत्यर्थः ।

(४) ते यथेति । ते रसा यथा तत्र मधुनि न विवेकं लभन्ते कथम् अमुष्याम्रस्य वृक्षस्य रसोऽस्म्यहम् अमुष्य पनसस्य रसोऽस्म्यहमित्येवं यथादृष्टान्तमेव खलु सोम्येमाः सर्वाः प्रजाः पुनः सुषुप्तौ मरणप्रलययोश्च सति सदाख्ये ब्रह्मणि संपद्य प्राप्य वयं सति संपद्यामहे संपन्ना भवाम इति न विदुरित्यर्थः ।

था तत्र विवेकं न लभन्तेऽमुष्याहं वृक्षस्य रसोस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः प्रजाः सर्वाः सति सम्पद्य न विदुः सति सम्पद्यामह' इति । इमाः(१) सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यस्ताः समुद्रात् समुद्रमेवापियन्ति समुद्र एव भवन्ति ता यथा तत्र न विदुरियमहमस्मीत्येवमेव खलु सोम्येमाः प्रजाः सत आगम्य न विदुः सत आगच्छामह, इति एवं लवणोदक(२)दृष्टान्तेनापि तथा प्रतिपादितम् । एवं 'यथा नद्यः (३)स्यन्दमानाः समुद्र' इति पूर्वोक्तं स्मर्तव्यम् । अत एव 'तिलेषु

---

(१) श्रुत्यन्तरमाह--इमा इति । निगदव्याख्यातम् ।

(२) लवणोदकदृष्टान्तेनेति ॥ लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तँ होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न वेदेति श्रुताविति शेषः । अयमर्थः--लवणमेतद् घटाद्युदकेऽवधाय प्रक्षिप्य अथ रात्रेरत्ययानन्तरं प्रातः काले मा मामुपसीदथा उपगच्छेथा इत्युक्तः स ह श्वेतकेतुस्तथा चकार यथा पित्रोपदिष्टं तथा कृतवान् तं श्वेतकेतुं परेद्युः प्रातर्ह पितोवाच किं यद्दोषा रात्रौ लवणमुदकेऽवाधाः निक्षिप्तवानसि हे अङ्ग तल्लवणमाहरेत्युक्तः पुत्रस्तल्लवणं ह किलदर्शनस्पर्शनाभ्यामवमृश्य न वेद न ज्ञातवानित्यर्थः ।

(३) यथा नद्य इति । यथा नद्यःस्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति । अयमर्थः--नद्यः गङ्गायमुनाद्याः स्यन्दमानाः गच्छन्त्यः नाम च रूपं च नामरूपे गङ्गाद्यात्मके विहाय त्यक्त्वा यथा समुद्रेऽस्तं गच्छन्ति समुद्रं प्राप्य यथा समुद्ररूपा भवन्ति तथा विद्वान्नामरूपाद्यात्मकात् विमुक्तः रहितः सन् परात् व्याकृतपरात्

तैलं दधिनीव सर्पिः' इति, एवं 'सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवाहितम्' इति सङ्गच्छते ।

एवमेव मोक्षधर्मेऽपि—

नानात्वैकत्वमेतावद् द्रष्टव्यं शास्त्रनिश्चयात् ।
(१)मशकौदुम्बरौ यद्वदन्यत्वं तद्वदेतयोः ॥

तत्रैव शुकानुप्रश्ने—

(२)'साक्षिक्षेत्रज्ञयोरेतदन्तरं विद्धि सूक्ष्मयोः ।
सृजत्यत्र गुणानेक एकः सृजति नो गुणान् ॥
'पृथग्भूतौ प्रकृत्योभौ संयुक्तौ चैव सर्वदा' ॥ इति ।

'प्रकृत्या—स्वभावेन । संयुक्तौ—सम्बद्धौ ।

यथा मत्स्योऽद्भिरन्यः (३)स्यात्सम्प्रयुक्तौ तथैव तौ ।
मशकौदुम्बरौ वापि सम्प्रयुक्तौ यथा सह ॥
इषीका वा यथा मुञ्जे पृथक् च सह चैव हि ।
तथैव संहितावेतावन्योन्यस्मिन् प्रतिष्ठितौ' ॥

---

अव्याकृतात्परमुत्कृष्टं दिव्यं प्रकाशरूपं पुरुषं सर्वत्र पूर्णं ब्रह्म उपैति-प्राप्नोतीत्यर्थः ।

(१) मशकौदुम्बराविति । औदुम्बरे विद्यमानोऽपि मशको न गृह्यते इत्यर्थः ।

(२) साक्षीति । साक्षी ईश्वरः, क्षेत्रज्ञो—जीवः स्वभावतो भिन्नौ संबद्धौ चेत्यर्थः ।

(३) अब्भिन्नोऽपि मत्स्यःसंबद्धः, यथा वा मुञ्जे इषीका-तृणतूलं सह वर्तते भिन्नं च तथा जीवेश्वरावपीति भावः ।

(१)अयं च भेदो विद्यमानोप्यधुना नापरोक्षीक्रियतेऽविद्यया प्रतिबन्धात् तत्साक्षात्काररूपा प्राप्तिरेवैकीभावशब्दार्थः ब्रह्मप्राप्तिरपि बहुशः श्रूयमाणा तत्रैव विश्राम्यति ।

अतएव मार्कण्डेये—

'दृष्ट्वा च परमात्मानं प्रत्यक्षं विश्वरूपिणम् ।
विश्वपादशिरोग्रीवं विश्वेशं विश्वभावनम् ॥
तत्प्राप्तये महापुण्यमोमित्येकाक्षरं जपेत्' ।

इति प्रत्यक्षानन्तरं या प्राप्तिः सापि तद्भेदप्रत्यक्षरूपैव । (अ)भेदोऽपि तत्रैव स्पष्टमुपदर्शितः—

यथाग्निरग्नौ निक्षिप्तः समानत्वमनुव्रजेत् ।
"तदान्यस्तन्मयो भवति न गृह्येत विशेषतः ॥

---

( १ ) अयं च भेद इति । जीवेशभेदः जीवजीवभेदः जीवजडभेदः ईशजडभेदः जडजडभेदः इति भेदपञ्चकज्ञानान्मोक्ष इति केचित् तथा च परमा श्रुतिः—

जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ॥
मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः ।
सोऽयं सत्योप्यनादिश्च सादिश्चेन्नाशमाप्नुयात् ॥

इति सर्वदर्शनसंग्रहे ।

ईशधर्मिकभेदज्ञानं मोक्षसाधनमित्यपरे ।

ईश्वरस्याप्रत्यक्षतया तद्धर्मिकस्य तत्प्रतियोगिकस्य वा भेदस्य ग्रहीतुमशक्यत्वम् । नच जीवस्य ईश्वरधर्मिकभेदस्याप्रत्यक्षत्वेऽपि स्वधर्मिको भेदः प्रत्यक्षोऽस्तु स्वस्य प्रत्यक्षत्वात् भेदप्रत्यक्षेऽधिकरणयोग्यत्वस्य तन्त्रत्वादितिवाच्यम् अविद्यारूपप्रतिबन्धस-

परेण ब्रह्मणा तद्वत् (१)प्राप्यैक्यं दग्धकिल्बिषः ।
योगी याति पृथग्भावं तद्भावं न कदाचन" ॥

विष्णुपुराणेऽपि—

एतान्यशेषरूपाणि नानारूपाणि पार्थिव ।
यतस्तच्छक्तियोगेन युक्तानि नभसा यथा ॥

एवं परमात्मजीवात्मानावुक्तौ—

उभयोस्त्वविभागेन साध्यसाधनयोर्हि यत् ।

विज्ञानमद्वैतमप्यस्तीत्युक्तमेव—

परमात्मात्मनोर्योगः परमार्थ इतीरितः ।

यदपि—

विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ।
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥
क्षेत्रज्ञः करणी ज्ञानं करणं तस्य तच्च तत् ।
निष्पाद्य मुक्तिकार्य्यं वै कृतकृत्यं निवर्त्तते ॥
(२)तद्भावभावनापन्नस्ततो ऽसौ परमात्मना ।

---

त्वेनाप्रत्यक्षत्वात् । प्रतिबन्धनिरासे च भेदसाक्षात्कारः स एव च ब्रह्मप्राप्तिरित्युच्यते । तदानीं च ब्रह्मणो ऽपि प्रत्यक्षमिति तद्धर्मिकोऽपि भेदः सुग्रह इति । तदेव वक्ष्यति-दृष्ट्वा च परमात्मानमित्यादिना । भेदसाक्षात्कार एव च जीवब्रह्मणोरेकीभावः । एकीभावश्च साम्यमेव रामसुग्रीवरैक्यमित्यत्र तथादर्शनात् ।

(१) प्राप्यैक्यमिति । साम्यं प्राप्य पृथग्भावं पार्थक्यं याति तद्भावं ब्रह्मत्वं न यातीत्यर्थः ।

(२) तद्भावेति तद्भावभावनापन्नः परमात्मनाऽभेदी भवति ।

भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥
विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणा भेदमसन्तं कः करिष्यति ॥ इति ।

तत्रापि प्राप्यत्वप्रापणीयत्वादिना भेद एवार्थतो दर्शितः । अभेदीत्यनेनापि साक्षात्कारसम्बन्धाभेदवत्त्वं, (१)भेदस्तु ब्राह्मणत्व स्थूलत्वादिनानारूपविशिष्टत्वेनात्मनो ज्ञानं 'नामरूपाद्विमुक्त' इति श्रुतेः । न तु वास्तवभेदस्तज्ज्ञानं वाऽज्ञानजन्यं सम्भवति अनादित्वान्मोक्षसाधनत्वेनोक्तत्वाच्च । एवं विभेदजनके (२)इत्यत्रापि । अत एवोक्तम् 'भेदमसन्तं कः करिष्यती'ति । वास्तवो भेदस्तिष्ठत्येवेति भावः ।

---

इति परमात्माभेदप्राप्तिमभिधाय तर्हि ज्ञानात्प्राग्भेद एवेति शङ्कां निराकर्तुं भेदश्च तस्याज्ञानकृत इत्युक्तम् नहि वस्तुतोऽन्यस्यान्यात्मत्वं ज्ञानसहस्रेणापि भवति ततश्च भेदप्रतिभासः प्रागविद्याविलसितोऽभेदश्च तिरोहित इति गम्यते अनन्तरं च तर्हि ज्ञाने नष्टे पुनरपि भेदोन्मज्जनमाशङ्क्य भेदनिदानोच्छेदाच्च निश्शेषं विनष्टत्वात् न पुनस्तत्प्रसक्तिरित्याह विभेदेति इत्यद्वैतवादिभिरुक्तेऽर्थेऽस्वारस्यं सूचयन्नाह-भेदश्चेति । तथाचात्र भेदपदं नान्योन्याभावपरम् । किन्तु ब्राह्मणत्वादिविशिष्टोक्तज्ञानपरं तस्य चाज्ञानजन्यत्वं 'नामरूपाद्विमुक्त' इति श्रुत्या स्पष्टमेवावगम्यते । भेदपदस्यान्योन्याभावपरत्वे तस्यानादितया अज्ञानकृतत्वासंभवात् ।

(२) इत्यत्रापीति । विभेदपदं स्थूलत्वादिनानारूपविशिष्टत्वेनात्मविषयकज्ञानपरम् ।

अविभागं च भगवानप्याह—

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ॥

अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम् ।

नचात्राविभागोऽप्यभेद एव, बाधितत्वादन्यथा ब्रह्मणो जन्याभेदाज्जन्यत्वमपि ब्रह्मणः स्यात् । अत एव—

'त्वं जातो भवसि विश्वतो मुखः' ।

'कार्य्यस्यापि च यः कार्यं प्रसीदतु स नो हरिः ।

इत्यादिश्रुतिस्मृतयोऽपि संगच्छन्ते ।

न चात्मपरमात्मनोरभेदादात्मनश्च शरीरसम्बन्धरूपाऽमुख्योत्पत्तिरर्थ इति वाच्यं 'तदैक्षत बहु स्यां प्रजायेये'ति 'तत्तेजोऽसृजते'त्यत्रान्यथापि दर्शनात् ।

## ईश्वरस्य विवर्ताधिष्ठानत्वनिरासः ।

नच विवर्त्ताधिष्ठानत्वरूपोपादानोपादेयभावादभेदोऽस्तु अत एव एकविज्ञानेन सर्वविज्ञानं मृत्पिण्डदृष्टान्तेनोपपादितमिति वाच्यं, 'न तदश्नोतीत्यनेन तन्निषेधात् (१)एकमृत्पिण्डस्य सकलमृत्पिण्डोपादा-

---

(१) एकमृत्पिण्डस्येति । स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचमानी स्तब्ध एयाय तंह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः १ येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति २ यथा सोम्यैकेन

नताया (१)एकनखनिकृन्तनस्य सकलकार्ष्णायसोपादानतायाश्च लोकशास्त्रयुक्तिविरुद्धत्वात् तस्मादेकमृदो ज्ञानात् सर्वमृदां ज्ञानं मृदभेदाद्, एवं सदभेदात् प्रपञ्चेऽपि, अभेदश्च विलक्षणजन्यजनकभावान्मशकौदुम्बरादिवदित्युक्तम् ।

(२)इत्थं च—

'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इति,

'सर्वं समाप्नोषि ततोऽसि सर्वः'

इत्यपि तत् परमेवेति ।

यत्तु विवर्त्ताधिष्ठानत्वमात्रं तदा तत्सम्बन्धज्ञानं 'सर्वं च मयि

---

मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञात ँ स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ३

(१) एकनखनिकृन्तनस्येति । यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यमेवँ स आदेशो भवतीति १ नखनिकृन्तनपदम् नखनिकृन्तनोपलक्षितकृष्णायसपरम् तथा च एकेन कृष्णायसपिण्डेन सर्वं कार्ष्णायसं कृष्णायसो विकारजातं विज्ञातं भवति कारणस्य कार्यानन्यत्वादित्यर्थः, कथं कार्यकारणयोरभेदप्रसिद्धिरित्यत आह—वाचेति । वाचारभ्यते इति वाचारम्भणं वागालम्बनं विकारः उच्यते परन्तु परमार्थतो न वस्त्वस्ति यतो नामधेयं नामैव धेयं नाममात्रं नार्थोऽस्तीत्यर्थः, तर्हि किमस्ति इत्याह कृष्णायसमिति कृष्णायसमित्येव कृष्णायसमेव तु सत्यम् वस्तुषु व्यावर्तमानेष्वनुस्यूतत्वादिति तदर्थः ।

(२) इत्थंचेति । सूत्रे मणिगणा इवेति दृष्टान्तेन जगद्ब्रह्मणोर्भेद एव प्रतीयत इतिभावः ।

पश्यति' इत्यादिना सहस्रशो नोपदिश्येत।

न च ब्रह्मणि लयकथनादुपादानत्वं स्यादिति वाच्यं 'प्रकृतिः पुरुषश्चैव लीयते परमात्मनि' इत्यनेन विरोधात् 'प्रकृतिं पुरुषश्चैव विद्ध्यनादी उभावपि' इत्यनादि(१)त्वोक्तेः तस्माल्लयोऽपि तन्नाशके क्वचिदुच्यत इति। 'वत्क्रारायस्य प्रविष्टानि कुलान्यस्माकमाहवे' इति हरिवंशोऽपि संगच्छते। इत्थं 'भार्या पुत्रः स्वका तनुः' इति संगच्छते। 'एष त आत्मान्तर्याम्यमृतः' 'तमात्मस्थ आत्मन्येवात्मानं पश्येत' इति।

(२)'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः'॥

गुहा—अन्तःकरणं 'गुहा ग्रन्थिभ्यः' इति दर्शनात् हृदयग्रन्थि

---

(१) अनादित्वोक्तेरिति। एवं प्रकृतिपुरुषयोः स्वानुपादाने परमात्मनि लयश्रवणादुपादाने एव लय इति नियमस्य भङ्ग इति भावः।

(२) ऋतं पिबन्ताविति। सुकृतस्य स्वयंकृतस्य कर्मणः ऋतं सत्यमवश्यभोक्तव्यत्वात् पिबन्तौ भुञ्जानौ जीवेशौ लोकेऽस्मिन् शरीरे स्थिताविति शेषः जीवेन सहैकत्र स्थितस्यापीश्वरस्य पानकर्तृत्वेऽन्वयो नास्ति सहैव दशभिः पुत्रैर्भारं वहति गर्दभीतिवत् कीदृशौ तौ परमे परस्य ब्रह्मणोऽर्धं स्थानं परार्द्धं तस्मिन्नुत्कृष्टे ब्रह्मस्थाने हार्दाकाशे या गुहा बुद्धिः तां प्रविष्टौ पुनः कीदृशौ छायातपौ छायातपाविव मिथो विरुद्धभोक्तृत्वाभोक्तृत्वाभ्यां विलक्षणौ ब्रह्मविदः ब्रह्मज्ञानिनः वदन्ति कथयन्ति पञ्चाग्नयः गार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्या येषां ते गृहस्थाः येच त्रिणाचिकेताः त्रिवारं चितो नाचिकेतो ऽग्निर्यैस्तेऽपि वदन्तीत्यर्थः।

रित्यनेनैकार्थत्वात् । छायातपाविति विरुद्धधर्मेण भेदबोधनार्थम् ।

## जीवेशभेदे भेदधिक्कारकारमतानुवादः ।

केचित्तु जीवेश्वरभेदे न किंचिदपि प्रमाणं तथाहि न तावत् प्रत्यक्षं तस्य चक्षुराद्ययो(१)ग्यत्वात् नापि मनसो योग्यस्तस्य प्रमाणत्वाभावात् (२)प्रमाणसहकारित्वादालोका(काला)दिवत् ।

न च चक्षुरादेः सहकारित्वं मनसः करणत्वमित्येव किन्न-स्यादिति वाच्यं रूपादिज्ञाने मानसत्वाननुभवात् ।

नापि (३)सुखदुःखादिप्रत्यक्षे मनः करणं, सुखादिसाक्षा-त्कारस्य (४)लाघवादेकत्वान्नित्यत्वात् दुःख(५)ज्ञानमुत्पन्नं नष्टमितिधीस्तु दुःखादेरुत्पादविनाशविषयिणी ।

---

(१) चक्षुराद्ययोग्यत्वादिति । बाह्येन्द्रियाणां रूपादिरहितात्म-ग्रहणे सामर्थ्याभावेन तद्गतभेदग्रहणेऽप्यसामर्थ्यादिति भावः ।

(२) प्रमाणसहकारित्वादिति । प्रमाणमपि प्रमात्रादिसह-कारीति तद्व्यावृत्तये प्रमाणपदम् ।

आलोकादिवदिति । विपक्षे नैयायिकमते आलोकादेरपि प्रमाणत्वप्रसङ्गः स्यात् ।

(३) ननु सुखादिप्रत्यक्षस्य परिशेषान्मन एव करणम् एवं मनसा इदं पश्यामीत्यनुभवाद्बहिरपि मनः करणमित्यत आह-नापीति ।

(४) लाघवादिति । सुखादिव्यवहारः स्वविषयज्ञानजन्यः व्यवहारत्वात्संमतवदित्यनुमानस्याप्युपलक्षणमिदम् ।

(५) ननु सुखप्रत्यक्षसमये दुखनाशानुभवादर्थात्तत्प्रत्य-क्षभेद इति कथं सुखादिप्रत्यक्षस्य नित्यत्वमत आह दुःखज्ञानमिति ।

न च (१)वैपरीत्यं स्यादिति वाच्यं सुखदुःखयोर्विरोधात् अन्यथा ज्ञानादौ विद्यमानेऽपि तदनुभवनियमे मानाभावात् जानामि न वेति (२)संशयोऽपि कदाचित् स्यात् ।

किंच प्रत्यक्षस्य सनिकर्षजन्यत्वाद्भेदेन सह मनसः सन्निकर्षाभावान्नासौ प्रत्यक्षः, तत्र हि न संयोगः (३)समवायो वाऽनभ्युपगमात् , (४)विशेषणता तु न सन्निकर्षो व्यवहितप्रदेशेऽप्यभावग्रहणप्रसङ्गात् ।

(५)न चाधिकरणेन्द्रियसन्निकर्षोऽपि कारणमिति वाच्यं

---

( १ ) वैपरीत्यमिति—दुःखाद्यनुभव एव जन्यः दुःखादौ तु तदुपाधिक एवोत्पत्त्याद्यनुभव इति वैपरीत्यं किं न स्यादिति भावः ।

( २ ) संशयोऽपीति । अयंभावः-ज्ञानेच्छादिविषयकनित्यसाक्षात्कारस्यैकस्यानुपगमे ज्ञानादेर्मनसा नियमेन ग्रहासंभवात् अनुभवदशायामपि मयेदमनुभूयते न वा इदानीमिच्छामि न वा इति संशयः स्यादिति, अतः दुःखादिसक्षात्कारस्य नित्यत्वान्न तत्र मनः करणम् मनसा पश्यमीत्यनुभवस्तु सन्निकर्षमात्रेण अयो दहतीतिवदारोपादुपपाद्यः ।

( ३ ) समवायो वेति । नवा तादात्म्यमपीत्यपि बोध्यम् । समवायस्यानुपगमात् मनसः संयोगस्य तादात्म्यस्य वा भेदेन सहासंभवात् ।

( ४ ) अभावस्य विशेषणतामात्रं सन्निकर्ष इन्द्रियसंनिकृष्टाधिकरणविशेषणता वा आद्यं निराकरोति-विशेषणतेति ।

( ५ ) द्वितीयं निराकरोति-नचेति ।

(१)शब्दाभावस्याप्रत्यक्षत्वप्रसङ्गात् [२] ।

न च योग्यानुपलब्धेरभावप्रत्यक्षजनिकाया व्यवहितप्रदेशेऽभावान्न तत्राध्यक्षमिति वाच्यं योग्यानुपलब्धेः कारणत्वे मानाभावाद् दुर्वचत्वाच्च न वा सा प्रकृते संभवति ईश्वरोपलम्भकाभावात्, प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकसमवधानरूपायास्तस्या [३]असंभवात् 'आचार्य्यवान् पुरुषो वेद' 'श्रोतव्य' इत्यादिना बोधितसहकार्य्यन्तरस्येदानीमसंभवात् शुद्धयोनिजत्वाज्ञाने ब्राह्मणत्वा[४]ग्रहवत्तदग्रहसंभवात् । एवम् [५]'अनृतेन हि प्रत्यूढाः

---

(१) शब्दाभावस्येति । कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रतया शब्दाभावाधिकरणेनाकाशेन तस्य संनिकर्षासंभवात्–स्वेन स्वस्य संनिकर्षासंभवादिति भावः ।

(२) ननु योग्यानुपलब्धिरेव जीवेश्वरभेदप्रत्यक्षे कारणमस्तु इत्यत आह-नचेति ।

(३) असंभवादिति । तत्कालीनमन आदेरीश्वरोपलम्भनायोग्यत्वादिति शेषः । तत्कालीनमनसः कुतो न योग्यतेत्यत आह–आचार्येति । श्रवणसहकृतमनस एव तद्योग्यत्वमिति भावः ।

(४) ब्राह्मणत्वाग्रहादिति । लौकिकोपदेशेन ब्राह्मणत्वज्ञानवदत्रापि श्रुत्युपदेशेनेश्वरज्ञानमिति भावः ।

(५) अनृतेनेति । 'प्रजा अहरहर्ब्रह्म गच्छन्त्यो न विदन्ति अनृतेन हि प्रत्यूढाः' इति । अहरहः सुषुप्तौ गच्छन्त्योऽपि स्थूलसूक्ष्मोपाधिलयेन तदभिमानकृतब्रह्मभेदशून्या अपि ब्रह्म न जानन्ति हि यस्मात् अनृतेन मिथ्याभूतात्मज्ञानेन प्रत्यूढाः आच्छादितस्वरूपका इत्यर्थः ।

(१)'नीहारेण प्रावृताः (२)'मायया्ऽपहृतज्ञानाः' 'अज्ञानेनानावृतं ज्ञानमि'त्यादिश्रुतिस्मृतिसिद्धाज्ञानरूपप्रतिबन्धकसत्त्वाच्च आत्मनो निरवयवत्वात् तेन मनसः संयोगाभावाच्च न ब्रह्मभेदो मनोयोग्यः ।

(३)किञ्च ब्रह्मत्वं नित्यज्ञानवत्त्वादिरूपं तदवच्छिन्नभेदस्तु न प्रत्यक्षो नित्यत्वादेर(४)योग्यत्वाद् गुरुत्ववद् घटभेदवच्च ।

---

(१) नीहारेणेति । 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव नीहारेण प्रावृता' इति । तमात्मानं न यूयं विदाथ य आत्मा इमाः प्रजाः जजान जनयामास कुतो न विद्मः तत्राह अन्यदित्यादि, अन्यत्–आत्मनो विलक्षणम् सद्रूपम्, अन्तरम्–आवारकं व्यवधायकम् आत्मनि भात्यपि स न भातीति व्यवहारजनकं स भवतीति व्यवहारप्रतिबन्धकं च बभूव–अनादिकालं व्याप्यास्ति । न च तस्यानादित्वमिवाविनाशित्वमपि स्यात् तथा च अस्मान् प्रति तदुपदेशो व्यर्थ इत्यत्राह नीहारेणेति–तस्माद्यूयं नीहारसदृशेन तेनान्तरेणाच्छादिताः तथा च नीहारवदेव तस्य विनाशित्वमावारकत्वादित्यर्थः।

(२) माययेति । इन्द्रियसन्निकर्षे सत्यपि तमसा घटस्येव अभेदस्यापि तत्संशयप्रयोजकानाद्यनिर्वचनीयाज्ञानेनावृतत्वात् स्वप्रकाशचिद्रूपेऽपि तस्मिन् तत्संशयादिविरोध्युपलम्भाभावरूपानुपलम्भसंभवान्नाभेदसत्त्वस्य तद्विरोधित्वम्, मायया–अनिर्वचनीयाज्ञानेनेत्यर्थः। मायापदस्याज्ञानपरत्वं स्फोरयति अज्ञानेनेति ।

(३) ननु ईश्वरत्वविशिष्टाभेदानुपलम्भादीश्वरभेदो जीवे गृह्येतेत्यत आह–किंचेति ।

(४) अयोग्यत्वादिति । नचेश्वरत्वस्य जातित्वाङ्गीकारान्न दोष इति वाच्यम्, ईश्वरत्वस्यैकव्यक्तिमात्रवृत्तितया जातित्वायोगात् । न च लौकिकेश्वरसाधारणेश्वरत्वं जातिरिति वाच्यम् समयभेदेन चेतनमात्रे तस्याः सत्त्वेन तुल्यतया आत्मत्वाद् भेदानुपपत्तेः, लौकिकेश्व-

किंच 'अहमिह' इतिपरिच्छिन्नतयानुभूयमाने जीवभेदोऽनुभूयते नाहमीश्वर इति न च निरुपाध्यात्मनः परिच्छेदः सम्भवति(१)।

(२)अपि चाहङ्कारो नात्मा दृश्यत्वाद् घटवत् । न (३)चाप्रयोराणां तद्भेदानुपपत्तेश्च । न च द्व्यणुकादिकर्तृत्वमीश्वरत्वम्, द्व्यणुकादेरतीन्द्रियतया तद्विशिष्टस्यातीन्द्रियत्वेन तदवच्छिन्न भेदस्य प्रत्यक्षत्वायोगात् ।

---

(१) संभवतीति । जीवात्मा स्वरूपेण विभुः तथा च 'अहमिहैवास्मि सदने' इति प्रतीत्या भासमानः परिच्छेदो विभौ तस्मिन् स्वाभाविको भवितुं नार्हतीति परिच्छिन्नाहङ्कारशवलात्मन एवाहंप्रत्ययविषयतया तत्र परिच्छेदप्रतिभास औपाधिक इति अहमीश्वरो नेति भेदप्रतिभास उपाधिशवलात्मनिष्ठ इत्यौपाधिकः रक्तोऽयं स्फटिकः शुक्लो नेति प्रतिभासवदिति भावः ।

(२) ननु दुःखादिधर्म्यहङ्कार एव अहमित्यनुभवविषयः स एवात्मा तदविषयस्य घटादेरनात्मत्वात् तस्मिंश्च सर्वगते प्रतिभासमानः परिच्छेदः शरीरतादात्म्यारोपनिबन्धनः तदुपाधिकः परभेदस्तु तत्र प्रतिभासमानः तत्र परस्मादभेदस्यासंभवात् स्वाभाविक एवेत्याशङ्क्याहङ्कारस्यानात्मत्वं साधयति—अपि चेति । ननु अहङ्कारोऽन्तःकरणं तदतिरिक्तो वा नाद्यः सिद्धसाधनापातात् नापि द्वितीयो बाधादिति चेन्न-दुःखादिसमसत्ताकस्तद्धर्मी प्रतियोगिसमसत्ताकात्मत्वप्रतियोगिकात्यन्ताभाववान् चतन्यविषयत्वात् घटवत् इत्यनुमाने अङ्कारो नात्मेत्यादेस्तात्पर्येणादोषात् ।

(३) नन्वनात्मत्वे न दृश्यत्वं प्रयोजकम् किन्तु दर्शनाभाववत्वं घटादावनात्मनि नियमेन दर्शनादतोऽप्रयोजकत्वं दृश्यत्वहेतारित्याशयेन शङ्कते-नचेति ।

जकत्वं, लाघवेन(१) दृश्यत्वस्यैवानात्मत्वेन व्याप्यत्वादतो(२)-ऽहङ्कारव्यतिरिक्तात्मा सिद्धः । स्व(३)प्रकाशो नित्यानुभवः प्रागुक्त एवेति न दृश्यः तथा चाहंकारविशिष्ट एव भिन्नतया प्रतीयत इति न शुद्धभेदः प्रत्यक्षः ।

नाप्यनु(४)मानम्, अभेदग्राहकश्रुति(५) विरोधादप्रयो(६)

---

(१) लाघवेनेति । दर्शनाभाववत्त्वस्य अनात्मत्वप्रयोजकत्वे तस्य अभावघटितत्वेन गौरवम् दृश्यत्वस्य च तत्प्रयोजकत्वे लाघवमिति भावः ।

(२) नन्वहङ्कारस्यानात्मत्वेऽपि कथं तदतिरिक्तात्मसिद्धिरित्यत आह-अत इति । अनात्मनि पक्षेऽतिरिक्तद्रष्टारं विना दृश्यत्वहेतोरनुपपत्तेरतिरिक्तात्मसिद्धिरिति भावः ।

(३) अहङ्कारातिरिक्तात्मकल्पने गौरवात् तस्यैव स्वद्रष्टृत्वकल्पने लाघवमिति नातिरिक्तात्मसिद्धिरिति शङ्कां परिहरति-स्वप्रकाश इति । अयं भावः परेषामप्यन्तःकरणातिरिक्तः आत्मा संमतः ततो नालौकिकात्मकल्पनागौरवं प्रत्युत तस्य मनसः प्रमाणत्वनिराकरणावसरे दुःखादेः स्वप्नादेश्च साक्षित्वेन प्रमाणयुक्तिभ्यां साधितैकनित्यस्वप्रकाशानुभवमात्रत्वकल्पनात् आत्मनानात्वस्याभावाल्लाघवम् परमते तु तत्कल्पनीयमिति गौरवम् स्वप्रकाशानुभवात्मनि स्वतः सिद्धे तद्विषयत्वरूपदृश्यत्वाभावान्न व्यभिचारः न वा तदसिद्धिरिति ।

(४) अनुमानमिति । जीवो ब्रह्मधर्मिकभेदप्रतियोगी ब्रह्मप्रतियोगिकभेदवान् वा पदार्थत्वात् घटवदित्यनुमानमित्यर्थः ।

(५) श्रुतीति । 'नान्योऽतोऽन्यो द्रष्टा' 'एष ते आत्मान्तर्याम्यमृतः' 'तत्त्वमेव तत्' 'अयमात्मा ब्रह्म' 'तत्त्वमसि' इत्यादि श्रुतीत्यर्थः ।

(६) अप्रयोजकत्वेति । कल्पितभेदेनापि निखिललौकिक

जकत्वाच्च ।

नापि श्रुतिस्तत्र मानम्, तस्या मानान्तरसिद्धभेदानुवादकत्वात् ।

ननु भेदश्रुतेरनुवादकत्वे भेदे तात्पर्याभावेन भेदार्थप्रतीतिः कथमिति चेन्न, तात्पर्य्याभावेऽपि शब्दशक्त्यादिभिरर्थप्रतीत्युपपत्तेः ।

न(१)च स्वाभाविकनुभवागोचरतात्त्विकभेदे श्रुतितात्पर्य्यम्, जीवे भेदद्वयस्य(२) बाधित्वात् । न चास्यैव(३) तात्त्विकत्वे श्रुतितात्पर्य्यमिति वाच्यं तत्रात्त्विकत्वबुद्धेः पामराणामपि सत्त्वात् ।

किंचाहमर्थे प्रतीयमानभेदस्योक्तरीत्या(४) सोपाधिकतया मिथ्यात्वेन तत्त्वावेदकश्रुतेर्न तत्र तात्पर्य्यम्, भेदज्ञानादनव(५)-

---

वैदिकव्यवहारोपपत्तेरप्रयोजकत्वमित्यर्थः ।

(१) ननु प्रत्यक्षसिद्ध आत्मभेदो व्यावहारिकोऽस्तु वास्तवस्तु तद्भेदोऽपूर्वः श्रुतिगम्यो भवत्विति शङ्कते—न चेति ।

(२) भेदद्वयस्येति । व्यावहारिकभेदस्य वास्तविकभेदस्य चेत्यर्थः ।

(३) अस्यैव—व्यावहारिकभेदस्यैवेत्यर्थः ।

(४) उक्तरीत्येति । परिच्छिन्नाहङ्कारपरामर्शे सत्येव आत्मनि भेदप्रतीतेस्तत्परिच्छेदवद् भेदाऽप्यौपाधिकत्वान्मिथ्येत्युक्तयुक्त्येत्यर्थः ।

(५) भेदज्ञानादिति । स्वाध्यायोऽध्येतव्य इत्यध्ययनविध्युपात्तवेदान्तानां फलपर्यवसयित्वमावश्यकम् ततश्च स्वर्गादेः क्षयादिदोषग्रस्ततया मुमुक्षवभिलषितत्वायोगात् प्रत्यक्षादिजन्यभेदज्ञानादपि तदुपपत्तेश्च नोपनिषदा भेदज्ञानस्य तत्प्रयोजनम् मोक्षस्य तु 'तमेव विदित्वाऽतिमृत्युमेति' इत्यात्ममोक्षज्ञानाधीनत्वश्रवणात् सोऽपि न तत्फलमित्यभिप्रेत्य भेदज्ञानादनवद्येत्युक्तम् ।

द्यपुमर्थाभावेन तस्याऽतत्परश्रुतिजन्यत्वायोगाच्च । प्र(१)त्युत 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'ति भेदज्ञानस्यानर्थहेतुत्वं श्रूयते । 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद'इत्यादिना भेदस्य निन्दितत्वाच्च न तत्र'श्रुतेस्तात्पर्य्यम् । 'नान्योऽस्ति द्रष्टा नान्योऽतोस्ति श्रोता नात्र का चन भिदास्ती'त्यादिवाक्येनानधिगताबाधितप्रयोजनवद्भेदाभावस्य प्रतिपादितत्वाच्च न भेदः सत्यो न वा श्रुत्यर्थः ।

(२)किंच 'द्वा सुपर्णेति' न जीवेश्वरपरं तद्धि 'तयोरन्यः पिप्पलं स्वाद्वत्ती'त्यहंकार (३)तादात्म्यविशिष्टजीवमनूद्य 'अन

---

(१) न केवलं भेदज्ञानादर्थाभावः अनर्थश्च ततः श्रूयते ततोऽपि श्रुतिर्न तत्परेत्याह-प्रत्युतेति ।

(२) पूर्वोक्तहेतुभ्यः सर्वासां श्रुतीनां सामान्यतस्तत्परत्वं निरस्य प्रत्येकमपि तन्निराकरोति-किंचेति ।

(३) अहङ्कारेण तादात्म्यं यस्य स चासौ जीवश्चेति तथोक्तः । अयं हि मन्त्रः जीवस्य परभिन्नस्यैव बुद्धिविशिष्टरूपेण कल्पितभेदस्य भोक्तृत्वमनूद्य तस्यैव तदविशिष्टरूपेणान्यस्य सतस्तदभावं प्रतिपादयति अन्यथा 'अनीहया शोचति मुह्यमानः' 'निरञ्जनःपरमं साम्यमुपैति' इत्यादि वाक्यशेषविरोधापातात् । तत्र साम्यमुपैतीतिमुक्तौ भेदस्य सूचितत्वात् तस्य सत्यत्वमिति वाच्यम् परमसाम्यस्याभेद एव पर्यवसानात् । अन्यथा 'न तत्समश्चाभ्यधिकश्च दृश्यते' 'न तत्समोऽस्त्यभ्यधिकः कुतोऽन्य' इति वचनविरोधः स्यात् ।

अपि चायं मन्त्रः पैङ्गिरहस्यब्राह्मणेन 'तयोरन्यः पिप्पलं स्वद्वात्तीति सत्त्वम् , अनश्नन्नन्योऽभिचाकशीतीति अनश्नन्नन्योऽभिपश्यतीति ज्ञः तावेतौ सत्त्वक्षेत्रज्ञौ तदेतत् सत्त्वं येन स्वप्नं पश्यति अथ यो

श्वन्नन्योऽभिचाकाशीती'ति तमेव ततो निकृष्याभोक्तृतया दर्शयति । निकृष्टाहङ्कारस्याभोक्तृत्वप्रतिपादनेनानुभवविरोधोऽपि परिहृतः स्यात् (१)अन्यथा 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातमि'त्युपक्रमस्य 'अन्या वाचो विमुञ्चथे'ति भेदवाङ्निषेधस्य 'ब्रह्मैवेदमि'ति पूर्वावाक्यस्य 'ब्रह्म वेद ब्रह्मैव भवति, इत्युपसंहारस्य च बाधः स्यात् ।

अर्थापत्तिरपि न भेदे मानं अन्यथोपपन्नार्थ(२)त्वात्, जीवाद् भेदे ईश्वरस्यात्मत्वं न स्यात् अह(३)मित्यनुभवेऽप्रकाशमानस्य

---

ऽयं शरीरे उपद्रष्टा स क्षेत्रज्ञः', इत्यादिना चित्स्वभावो जीवो जडस्वभावबुद्धितादात्म्यापन्नः सत्त्वशब्दवाच्यः । तदुपाधिकभेदेन शुद्धचिदात्मनो भिन्नो भोक्तृत्वादिविकारमनुभवति केवलजडस्य भोक्तृत्वायोगात् केवलस्तु तद्रहितः शुद्धबोधात्मनाभितः प्रकाशते इति बुद्धिकृतभेदानुवादेन शुद्धजीवस्वरूपपरतया व्याख्यात इति नास्य जीवेशभेदपरत्वमिति भावः ।

(१) अन्यथेति । कस्मिन् हि भगव इति वाक्यमात्मैव सर्वस्य स्वरूपमित्येतत्परम् अन्यथा तज्ज्ञानात्सर्वतत्त्वज्ञानोपन्यासायोगात् ततश्चेदं भेदविरोध्येव । अन्येषां तद्विरोधित्वं तु स्पष्टमेव ।

(२) अनुपपन्नार्थत्वादिति । 'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' इति श्रुतिपर्यालोचनया अनिर्वचनीयव्यावहारिकभेदादेव सकलौकिवैदिकभेदव्यवहारोपपत्तेः, सत्यभेदं विना कस्याप्यर्थस्यानुपपत्तेरभावान्नार्थापत्तिः सत्यभेदे प्रमाणमित्यर्थः ।

(३) ननु भेदिमते लोकप्रसिद्ध्यनुरोधेनाहमनुभवालम्बनयोग्यत्वमात्मत्वमुत ज्ञानाश्रयत्वं जातिविशेषो वा तत्र नाद्य इत्याह—अह-

घटादिवदनात्मत्वात् (१)परमते सुखादिसमवायिकारणतावच्छेदकस्य तदनधिकरणे वृत्त्ययोगाच्चेत्याहुः ।

## भेदधिक्कारकारमतस्य खण्डनम् ।

तन्न—'नाहं जगतः कर्ता' 'नाहमिदानीमानन्दवान्' 'नाहमानन्दः' इत्यादिप्रत्यक्षाणां दुरपलपत्वात् । तत्र चक्षुरादेः करणत्वासम्भवान्मन एव करणं कल्प्यते ।

नच प्रमाणसहकारित्वान्न (२)तत्प्रमाणमिति वाच्यम्, अप्रयोजकत्वात् शब्दप्रत्यक्षादौ श(३)ब्दादेः श्रोत्रादिसहकारित्वाच्छब्दादेरप्रमाणतापत्तेश्च, मनस एव प्रमाणत्वं चक्षुरादेः सहकारित्वमित्यस्यापि सुवचत्वात् ।

---

मित्यनुभव इति । अयं भावः मनोजन्यानुभवे कदाप्यप्रकाशमानस्येश्वरस्य तदालम्बनत्वायोगाद्घटादिवदनात्मत्वं स्यात् नापि द्वितीयः अहमनुभवागोचरस्य घटादिवत् ज्ञानाश्रयत्वायोगात् इति ।

(१) तृतीयेऽपि आत्मत्वानुपपत्तिरूपदोषमाह—परमत इति । नैयायिकैर्हि सुखसमवायिकारणतावच्छेदकतया आत्मत्वं जातिः साध्यते सा च जातिः सुखसमवायिकारणत्वाभाववतीश्वरे कथं तिष्ठेदिति भावः ।

(२) तत्प्रमाणमिति । मनो न प्रमाणं प्रमाणसहकारित्वादालोकवदित्यनुमानाकार इत्यर्थः ।

(३) शब्दादेरिति । शब्दप्रत्यक्षे श्रोत्रस्येव तादात्म्येन शब्दस्यापि कारणतया शब्दस्य सहकारित्वमिति भावः ।

नच त(१)त्र मानसत्वं नानुभूयते किन्तु चाक्षुषत्वादिकमेवेति वाच्यं, मनः करणकत्वस्याप्रत्यक्षत्वेऽपि क्षतेरभावात् तदभावस्याप्य प्रत्यक्ष(२)त्वात् । अतएव 'मनसा ह्येव पश्यति मनसा शृणोती'ति चाक्षुषादावपि मनसः करणत्वं वदन्ती श्रुतिर्निराबाधा । चाक्षुषत्वादिकन्तु चक्षुषः सहकारित्वेऽपि नानुपपन्नम् ।

किंच यथा रूपादिप्रत्यक्षेऽनुभवसिद्धे तत्करणतया चक्षुरादिकं कल्प्यते तथा भेदप्रत्यक्षेऽपि करणं मनोवान्यदेव वा कल्प्यतां न तु प्रत्यक्षापलापः ।

ननु भेदस्य काल्पनिकत्वं कल्प्यतां करणबाधादिति चेन्न—रूपादेरपि काल्पनिकत्वेनोपपत्तौ चक्षुरादिकमपि न कल्प्येत यत्सहकारित्वं मनसः स्वीकुरुषे ।

यदपि सुखदुःखादि साक्षात्कारस्य नित्य(३)त्वं तदपि तुच्छं-रूपादिसाक्षात्कारस्य (४)तथात्वापत्तौ चक्षुरादेरप्यकल्पनापत्तेः ।

किंच सुखादेर्नित्यत्वं तत्साक्षात्कारस्त्वनित्य इत्येव किं

---

(१) तत्र—चाक्षुषे । चाक्षुषत्वादिकमिति । एवं च न मनसस्तत्र करणत्वं किन्तु चक्षुष एवेति भावः ।

(२) अप्रत्यक्षत्वादिति । चाक्षुषे यदि मानसत्वं नानुभूयते तर्हि तदभावोऽपि नानुभूयते इति तस्य मानसत्वेऽपि न क्षतिरिति भावः ।

(३) नित्यत्वमिति । तथा च सुखसाक्षात्कारस्य नित्यतया तत्करणत्वेन न मनसः प्रमाणत्वसिद्धिरिति भावः ।

(४) तथात्वापत्तौ—काल्पनिकत्वापत्तौ ।

न (१)स्यात् ।

युगपत् सुखदुःखादेर्वि(२)रोध इति चेत् तत् साक्षात्कार-(३)योरपि विरोधः केन वारणीयः ।

अस्तु वा तथैव भेदसाक्षात्कारोऽपि नित्यः, (४)भेदज्ञानोत्पाद-विनाशधीस्तत्तत्प्रतियोगिज्ञानादिकं भेदज्ञानस्य सहकारि यथा उत्पन्नः कः इत्यादिज्ञानस्य सहकार्य्युत्पादविनाशविषयिण्यस्तु ।

ननु ज्ञानसुखादिसत्त्वेपि तदनुभवनियमे मानाभावात् कदाचिज्जानामि न वा सुखी नवेति संशयोऽपि स्यादिति चेन्न ज्ञानसुखादेरेव तदनुभवसामग्रीत्वेन तदनुभवनियमात् । नवा सन्निकर्षाभावः मनः (५)संयुक्तविशेषणताया एव तत्त्वात् ।

शब्दाभावप्रत्यक्षे इन्द्रियसम्बद्धविशेषणताया व्य(६)-

---

(१) न स्यादिति । तथाच तत्करणतया मनसः प्रमाणत्वसिद्धिरिति भावः ।

(२) विरोध इति । सुखदुःखयोर्युगपद्विरोध एव तयोर्नित्यत्वे बाधकः अन्यथोभयोर्नित्यत्वेन सहावस्थान एव कल्प्यः स्यादिति भावः ।

(३) साक्षात्कारयोरिति । सुखदुःखसाक्षात्कारयोर्नित्यत्वे तयोरपि सहावस्थान एव स्यादिति भावः ।

(४) भेदज्ञानेत्यत आरभ्य अस्त्वित्यन्तस्य स्थाने 'भेदज्ञानोत्पादविनाशधीस्तु तत्प्रतियोगिज्ञानं भेदज्ञानस्य सहकारि (व्यञ्जकं) तद्विषयिणी शब्दनित्यत्ववादिमते उत्पन्नः क इति प्रतीतिवत्' इति पाठो युक्तः प्रतिभाति ।

(५) भेदप्रत्यक्षे सन्निकर्षमुपपादयति । मन इति ।

(६) व्यभिचार इति । तत्र श्रोत्रेन्द्रियस्याकाशतया स्ववि-

भिचार इति चेत् अभावप्रत्यक्षमात्रे एक एव सन्निकर्ष इति केन प्रतारितोसि ।

विशेषणतायाः सन्निकर्षत्वे किम्मानमिति चेत्—फल(१)-मेव, चक्षुः संयोगादिवत् ।

योग्यानुपलब्धेर्दुवचत्वे तु मास्तु सा कारणं कल्प्यतां कारणान्तरम् । ईश्वरोपलम्भकाभावेऽपि स्तम्भे पिशाचभेदवत्तद्भेदस्यापि प्रत्यक्षत्वेऽविरो(२)धात् ।

पिशाचभेदोऽपि कथं प्रत्यक्ष इति चेदनुभवं पृच्छ । प्रतियोग्युपलम्भकसमवधानं नास्तीति चेद्विलीयतां सापि योग्यता, कार्य्यानुसारिणी हि कारणकल्पना । तथाच तत्तदभावप्रत्यक्षे प्रतियोगिज्ञानतत्तदधिकरणसन्निकर्षादेः कारणत्वमेव कल्प्यताम्(३) ।

न च विशुद्ध(४)योनिजत्वाग्रहे ब्राह्मणत्वाग्रहवत् उपदेशाभावात् तदग्रहः अज्ञानस्य प्रतिबन्धकत्वाच्चेति वाच्यं, तत्र ब्राह्मण-

---

शेषणतैव सन्निकर्षः न तु स्वसम्बन्धिविशेषणतेति भावः ।

(१) फलमेवेति । अभावप्रत्यक्षमेवेत्यर्थः । यथा घटादिप्रत्यक्षं चक्षुः सन्निकर्षादेः सन्निकर्षत्वे प्रमाणं तद्वदिति भावः ।

(२) अविरोधादिति । यथा पिशाचस्याप्रत्यक्षत्वेऽपि तद्भेदः प्रत्यक्षः तथेश्वरस्याप्रत्यक्षत्वेऽपि तद्भेदः प्रत्यक्ष एव स्यादिति भावः ।

(३) कल्प्यतामिति । अत्यन्ताभावप्रत्यक्षे प्रतियोगिज्ञानं भेदप्रत्यक्षे तदधिकरणसंनिकर्षः कारणमिति भावः ।

(४) विशुद्धेति । विवाहितब्राह्मणब्राह्मणीजन्यत्वग्रहे एव ब्राह्मणत्वग्रह इति तत्र 'अयं विवाहितब्राह्मणब्राह्मणीजन्य इत्युपदेशोऽपेक्ष्यते । तद्वद् ईश्वरभेदग्रहेऽपि उपदेशोऽपेक्ष्यते इति भावः ।

त्वाभावस्याप्रत्यक्षत्वादत्र तु भेदस्य प्रत्यक्षत्वात् । उपदेशस्तु ब्रह्मसाक्षात्कारे शरीराद्यसंपृक्तात्मसाक्षात्कारे चापेक्षितः ।

नच निरवयवेनात्मना कथं मनसः संयोगः अवच्छेदकाभा(१)-वेन संयोगतदभावयोरसंभवादिति वाच्यं, संयोगाभावस्य संयोग-कारण(२)त्वाभावात् ।

व्याप्ति(३)स्तेनास्तीति चेत् संयोगस्य प्रमाणिकत्वादप्रयोजिका-व्याप्तिरेव भज्यतां—न (४)चा वयवस्यैवावच्छेदकत्वमितिमन्त्रपाठोऽस्ति ।

न च ब्रह्मत्वं नित्यज्ञानवत्त्वं नित्यत्वं चाऽयोग्यमिति न तदवच्छि-न्नाभावो योग्य इति वाच्यं स्तम्भे पिशाचत्वावच्छिन्नभेदवत्तत्-(५)प्रत्यक्षसम्भवात् । मम प्रयत्नो न क्षितिविषयकः क्षितिविषय-

---

(१) अवच्छेदकाभावेनेति । संयोगस्याव्याप्यवृत्तितया यत्कि-चिद्देशावच्छेदेनैव मनः संयोगो वक्तव्यः सच न संभवत्यात्मनो निर-वयवत्वादितिभावः ।

(२) संयोगकारणत्वाभावादिति । यदि संयोगाभावस्य संयोग-कारणत्वं स्यात्तदा संयोगाधिकरणे संयोगाभावस्यावश्यकत्वं स्यात् नेष्यते च तत् तथाचात्ममनः संयोगो व्याप्यवृत्तिरेवास्त्विवति भावः ।

(३) व्याप्तिरिति । संयोगाभावे संयोगव्यापकताया घटादौ दर्शनेन संयोगहेतुना संयोगाभावानुमानसम्भवादिति भावः ।

(४) नवेति । भावाभावयोरवयव एवावच्छेदक इति नियमा-भावेनानवयवस्यैव शरीरादेरवच्छेदकत्वसम्भवात् शरीरावच्छेदना-त्मनि मनः संयोग इति प्रतीतेः तथा चात्ममनः संयोगस्याव्याप्य-वृत्तित्वेऽपि न क्षतिरिति भावः ।

(५) तत्प्रत्यक्षेति । ईश्वरत्वावच्छिन्नभेदप्रत्यक्षेत्यर्थः । भेदप्रत्यक्षे प्रतियोगिप्रत्यक्षस्यातन्त्रत्वादिति भावः ।

कप्रयत्नवान्नाहं निर्दुःखी नाहमित्यादिप्रत्यक्षस्याबाधात् ।

न च परिच्छिन्नतयानुभूयमाने जीवे भेदोऽनुभूयते शुद्धस्य तु न परिच्छेदः सम्भवतीति वाच्यं परिच्छिन्नत्वेनाननुभूयमानेऽपि भेद भानं सम्भवति(१) विशिष्टे विशेष्यभेदाभवात् अन्यथा दण्डी पुरुषो न पुरुषः गृहवर्त्तिघटो न घट इति प्रतीत्यापत्तेः ।

एतेन अहंकारविशिष्टे भेदः प्रतीयत इति परास्तम् ।

न वाहंकारान्तगेक्तौ मानमस्ति अहंकारो नात्मा दृश्यत्वादित्यनुमानमाश्रयासिद्धिग्रस्तम् । आत्मा नाहंकारो नित्यत्वादिति तु साध्याप्रसिद्धिपराहतम् ।

किंच सोनुवीक्ष्य नान्यदात्मनोऽपश्यत् सोहमस्मीत्यग्रे व्याहरद् ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदाहं ब्रह्मास्मीति श्रुतिरेवात्मन्यहंत्वेन भानं वदन्ती प्रत्यर्थिप्रतिवादिनो गर्वं दूरीकरोति अहङ्कारं दूरमपसारयति ।

अनुमानमपि तत्र प्रमाणं तथाहि विवादपदं ब्रह्मभिन्नं बाधकाभावात् ।

नन्वभेदश्रुतिर्बाधिका षड्विधतात्पर्य्यलिङ्गवत्या प्रत्यक्षादिबहुतरप्रमाणसचिवया भेदश्रुत्या विरोधात् ता(२)सामन्यपरत्वात् ।

न चाभेदे लाघवं भेदे गौरवमिति प्रतिकूलतर्को बाधक इति

---

(१) सम्भवतीति । परिच्छिन्ने भेदभाने शुद्धेऽपि भेदभानसम्भवात् । युक्तिमाह—विशिष्ट इति ।

(२) तासामिति । अभेदश्रुतीनामित्यर्थः अन्यपरत्वादिति । उपासनापरत्वाद् द्वेषाभावपरत्वाद्वेत्यर्थः ।

वाच्यं दुःखित्वनिर्दुःखत्वसर्वज्ञत्वाल्पज्ञत्वादिबहुतरविरुद्धधर्मैः प्रत्यक्षेण च भेदसिद्धौ प्रमाणवतो गौरवस्याबाधकत्वात्। अन्यथा घटपटयोरपि भेदो न स्यात्, न स्याच्च लाघवगौरवयोरपि भेद इति सर्वं व्याकुली(१)स्यात्।

न चाप्रयोजकत्वं, बन्धमोक्षाद्युपपत्तेरेव विपक्षबाधकत्वात्।

एवं (२) श्रुतिरपि तत्र प्रमाणमित्युक्तम्। न च लोकसिद्धभेदानुवादिनी सा श्रुतिरिति वाच्यं यतो भेदो न लोकसिद्धो न वा प्रमाणसिद्धः भेदे प्रमाणप्रसराभावस्य त्वयैवावेदितत्वात्, भ्रमसिद्धार्थबोधकत्वे त्वप्रमाणतापत्तिः, कथं वा सार्थकत्वे सम्भवत्यनुवादकत्वं कल्प्यम्।

न च भेदस्य श्रुतिप्रतिपादितत्वेऽपि तत्र श्रुतेस्तात्पर्य्याभावान्न भेदः श्रुत्यर्थः, अन्यथा (३)ग्रहैकत्वादेरपि तथात्वप्रसङ्गः यत्परः शब्दस्तस्यैव शब्दार्थत्वात्, अत एव 'वारिदस्तृप्तिमाप्नोति'

---

तथा च द्वैतोक्तिरत्नमालायां श्रीमत्पञ्चाननतर्करत्नभट्टाचार्य महोदयाः—

अद्वैतोपासनाभ्यासाद्रागद्वेषवलक्षयः।
तदर्थं क्वचिदुद्दिष्टमतथ्यमपि तथ्यवत्॥ इति।

(१) आकुलीस्यादिति। शून्यवाद एव स्यादिति भावः।

(२) श्रुतिरिति। 'द्वा सुपर्णा' इत्यादिरूपेत्यर्थः।

(३) ग्रहैकत्वादेरपीति। 'ग्रहं संमार्ष्टि' त्यत्र किमेकस्य ग्रहस्य सम्मार्ग—उत सर्वेषामिति संशये—

'तत्र श्रुतिवलाद्यद्वत्संख्योपादेयगामिनी।
विवक्षिता तथोद्देश्यगता श्रुत्यविशेषतः'॥

इत्यादौ शब्दाप्रतिपाद्यमपि वारिदानस्य तृप्तिसाधनत्वं शब्दार्थ इति वाच्यं—न तावत्तात्पर्यं श्रुतेः सम्भवति श्रुतेरचेतनत्वात् तात्पर्य्यस्येच्छागर्भत्वात् । न वा वक्तुः, श्रुतेर्वाक्यार्थज्ञानपूर्वकतायास्त्वयाऽनभ्युपगमात् ।

'अग्निर्हिमस्य भेषजमि'त्यादेः प्रमाण्यापत्तिरिति चेद्, नेति को ब्रूते ।

अज्ञातज्ञापकत्वं नास्तीति चेत् किमागतमर्थतथात्वस्य ग्रहैकत्वमप्यर्थः स्यादिति चेत् स्यादेव । द्वितीयस्य सम्मार्गो नस्यादिति चेत् कुतो नस्यात् न हि द्वितीयसम्मार्गाभावः श्रुतेरर्थः । द्विरवद्यतीत्यादौ तु द्विर्मात्रावदानस्य लक्षणयैव बोधः सा तु प्रमाणसद्भावे कल्प्यते न तु ग्रहैकत्वे तथा । परन्तु 'इन्द्रो वृत्रमहनदि'त्यादेः प्रयोजनवदर्थप्रतिपादनासम्भवान्नैरर्थ्येऽपि नाप्रमाण्यम् ।

अत एवानुदितहोमनिन्दादेः श्रुत्यन्तरविरोधादप्रमाण्यं माभूदित्युदितहोमप्रशंसैव लक्षणया प्रतिपाद्यते । एवं राजसूयप्रकरणे अक्षैर्दीव्यतीत्यस्याप्राप्तप्रापकत्वाभावेन नैरर्थक्यं माभूदित्यङ्गत्वपर्य्यन्तमर्थः ।

---

इति पशुना यजेतेत्यत्र विधेयगतसंख्याया विवक्षितत्वमिवोद्देश्यगतसंख्याया अपि विवक्षितत्वमेव न्याय्यमिति पूर्वपक्षे—

ग्रहस्य संमृजेर्वैतत्प्रधानं गुण एव वा ।
सर्वथा वाक्यभेदः स्यादतो नास्य विधेयता' ॥

इति ग्रहं संमृज्याद्यं संमृज्यात्स एक इति वाक्यभेदापत्त्योद्देश्यगतसंख्याया अविवक्षितत्वमिति सिद्धान्तः । यथा तत्रैकत्वस्याविवक्षितत्वान्नैकत्वं श्रुत्यर्थः तथा प्रकृते भेदोऽपि न श्रुत्यर्थ इति भावः

नन्वभेदश्रुतिविरोधादन्यपरत्वं भेदश्रुतीनामिति वाच्यम् भेदश्रुतिविरोधादभेदश्रुतीनामन्यपरत्वसम्भवात्।

अनुभवसिद्धभेदप्रतिपादकत्वान्नैरर्थक्यं भेदश्रुतीनाम्, अज्ञात ज्ञापकत्वात् सार्थकत्वमभेदश्रुतीनामतो बलवत्त्वं तासामिति चेत्— अत एव भेद(१)तात्त्विकत्वे तात्पर्य्यं, न हि त्रिकालाबाध्यत्वलक्षणतात्त्विकत्वमनुभवसिद्धं येनानुवादकत्वाद्वैयर्थ्यं स्यात्।

किं च गुरुत्वादृष्टादीनां व्यावहारिकत्वं घटाकाशादिवद्भेदोपपादनमपि तथा, तथा च तन्निरासाय भेदश्रुतीनां सार्थक्यम्।

नच भेदस्य निन्दि(२)तत्वात् भेदबोधकश्रुतीनां दौर्बल्यमिति वाच्यम्, 'एकाकी न रमते' 'एकाकी बिभेती'त्यादिनाऽभेदस्य निन्दितत्वात्।

वस्तुतस्तु भेदो न निन्द्यते तस्य भयजनकत्वाभावाद्यद्यसौ

---

(१) भेदतात्त्विकत्वेति। यथा प्रत्यक्षादिभिर्विरोधपरिहाराय वेदान्तिभिरुच्यते 'यत् प्रत्यक्षादिभिर्न त्रिकालाबाध्यत्वरूपं सत्यत्वं घटादीनां बोध्यते किन्तु व्यावहारिकमेवातो न तैरागमस्य विरोध' इति, तथा प्रत्यक्षादिना भेदे व्यवहारिकत्वस्य सिद्धत्वेऽपि कालस्याप्रत्यक्षत्वात्प्रत्यक्षत्वे वा कालत्रयस्य युगपत्प्रत्यक्षतो ग्रहीतुमशक्यत्वात् तद्घटितस्य तात्त्विकत्वस्य सुतरां ग्रहीतुमशक्यत्वमिति। त्रिकालाबाध्यत्वरूपतात्त्विकत्वस्यासिद्धतया तद्बोधनाय भेदश्रुतीनामावश्यकतया नानुवादकत्वलक्षणं दौर्बल्यं तासामिति भावः।

(२) निन्दितत्वादिति। 'उदरमन्तरं कुरुतेऽथ तस्य भयं भवति' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति स पशुः' इत्यादिश्रुतिभिरिति शेषः।

भयजनकस्तदा निन्दितोऽपि भयं जनयेदेव तस्माद् भेदज्ञानं भयजनकम्—अत एव 'नानेव पश्यति' 'अ(१)थ येऽन्यथा विदुः' 'अन्योऽसावन्योहमिती'त्युच्यते । इत्थं(२)च 'द्वितीयाद्वै भयं भवती'त्यत्रापि द्वितीयज्ञानादित्येवार्थः । नान्योतोऽस्तीत्यादौ प्राधान्यात् तथा व्यपदेशो राजैवात्र मनुष्य इतिवत् पार्थ एव धनुर्धर इतिवच्च ।

वस्तुतो विभागलक्षणभेद एव निन्द्यते अविभागलक्षणाभेदश्च स्तूयते इत्युक्तभेदज्ञानस्य पुमर्थसाधनत्वं च दर्शितम् ।

(३)नन्वहङ्कारतादात्म्ये जीवे भेदप्रतिपादनान्न दोष इति चेन्न तथाप्रतिपादकाभावा(४)दहंकारे मानाभावाच्च । 'अथान्यः' 'अहं ब्रह्मास्मी'त्यादीनामप्यमुख्यत्वं स्यात्, स्याच्च त्वंकारेदंकारादिकमप्यतिरिक्तम्, इत्थमेव कृतसाक्षात्कारस्यापि 'अहमनुरभवं'

---

(१) 'अथ येऽन्यथाऽतो विदुरन्यराजानस्तेऽक्षय्यलोका भवन्ति' इति । अतः उक्तरूपाद्वैतादन्यथा भेदेन भूमानं ये विदुस्ते अन्यराजानः अन्यो राजा स्वामी येषां तेऽन्यराजानोऽस्वतन्त्रा इति यावत् ।

(२) ननूक्तश्रुतीनामुक्तरीत्या भेदज्ञाननिन्दापरत्वं न तु भेदनिन्दापरत्वमित्यस्योपपादनेऽपि 'द्वितीयाद्वै भयम्भवती'त्यस्य का गतिरित्यत आह—इत्थञ्चेति ।

(३) ननु ब्रह्मवैलक्षण्यं चेदात्मनि ततो भेदस्तत्किमहङ्कारातिरिक्तेऽहङ्काररूपे वात्मनि नाद्यः अहङ्कारातिरिक्तात्मनः कूटस्थचिन्मात्रतयासिद्धस्य वास्तववैलक्षण्यायोगात् न द्वितीयः दृश्यत्वादिनाऽहङ्कारानात्मत्वस्य साधनादिति वेदान्तिदूषणमनुवदति नन्विति ।

(४) अहङ्कार इति । जीवातिरिक्ताहङ्कारे इत्यर्थः । मानाभावादिति । दृश्यत्वहेतोर्दूषितत्वादिति शेषः ।

'नाहं शरीरं न मनस्तथाहमि'त्यादि निराबाधम् । यथा च न पूर्वापरविरोधादिस्तथोक्तमधस्तात् ।

अतएव सोऽश्नुते सर्वान् कामान् सह ब्रह्मणेति मुक्तौ भेदः श्रूयते । तथा च भेदस्य तात्त्विकत्वं विनाऽनुपपद्यमानत्वादर्थापत्तिरपि तत्र मानम् ।

न च तदानीं भोगान्तरस्यासम्भवाद् ब्रह्मरूपेण युगपत्सर्वानन्दानुभवस्तदर्थ इति वाच्यम्, ब्रह्मसाहित्येन सर्वानन्दानुभवस्यैव तदर्थत्वौचित्यात् ।

न च साहित्यार्थे ब्रह्मणो(१) गुणभावः स्यादिति वाच्यम्, पित्रा सहागतः पुत्र इत्यादौ (२)व्यभिचारात् ।

यत्तु—

सोऽश्नुते सकलान् कामानक्रमेण सुरर्षभाः ।

---

(१) गुणभाव इति । 'सहयुक्तेऽप्रधाने' इत्यनेन अप्रधाने तृतीयाविधानात् तथाच ब्रह्मणेति तृतीया इत्थंभावे ततश्च तदावारकाऽविद्यानिवृत्तौ तद्भावं गतो विद्वाँस्तदन्तर्भूतान् सर्वान् कामान् मानुषानन्दादारभ्योत्तरोत्तरदशगुणितान् ब्रह्मानन्दावसानान् सह युगपदनुभवतीत्येवार्थ इति भावः ।

(२) व्यभिचारादिति । अयंभावः अप्राधान्यं द्विविधम् अन्याधीनत्वरूपं लौकिकं शाब्दगुणक्रियान्वयित्वाभावरूपं शास्त्रीयं तत्र 'सहयुक्तेऽप्रधाने' इत्यत्र शास्त्रीयमेवाप्राधान्यं गृह्यते इति ब्रह्मणः शाब्दाप्राधान्येऽपि न तदधीनत्वलक्षणमप्राधान्यं येन जीवापेक्षया गुणत्वं स्यात् । अत एव देवदत्तेन सह पठेत्युक्तेऽन्यस्य क्लेशो भवतीति । व्यभिचार इतिकथनं तु लौकिकमेवाप्राधान्यं सूत्रे विवक्षितमित्यभिमानेन ।

विदितब्रह्मस्वरूपेण जीवन्मुक्तो न संशयः ॥

इति स्कान्दवचनं तत्र विदितं ब्रह्म येन तत्तथा तादृशेन स्वरूपेणेत्यर्थः । इत्थंच भेदे सर्वप्रमाणसिद्धेऽपि यद्भेदवचनं तदुपासनापरमविभागपरं चेति ।

न च भेदमते ईश्वरस्यात्मत्वं न स्यादहमित्यनुभवेऽप्रकाशमानत्वाद् घटादिवदिति वाच्यम्, (१)अप्रयोजकत्वात् । सुखसमवायिकारणतावच्छेदिका जातिस्तत्र न स्यात्प्रमाणाभावादिति चेत् किमेतावता तां (२)विनाप्यात्मशब्दप्रयोगस्य श्रुत्यादिसिद्धत्वात् ।

किं(३) तत्र प्रवृत्तिनिमित्तमिति चेत्, तद्व्यक्तित्वमेव, नानार्थत्वेऽप्यात्मशब्दस्य क्षतेरभावात् । अस्तु वा ज्ञानवत्त्वादिकं (४)तथा ।

वस्तुतस्तु (५)मोक्षसाधनीभूतज्ञानेऽवच्छेदककोटिप्रविष्टतया

---

(१) अप्रयोजकत्वादिति । देवदत्तीयाहमित्यनुभवेऽप्रकाशमानतया यज्ञदत्तस्यानात्मत्वापत्तेरित्यर्थः । यज्ञदत्तीयाहमित्यनुभवे प्रकाशमानत्वात्तथात्वमिति चेत् ईश्वरोहमित्यनुभवे प्रकाशमानत्वादीश्वरस्यापि तथात्वमित्यदोष इति भावः ।

(२) तां विनापीति । आत्मत्वजातेरभावेऽपीत्यर्थः ।

(३) तत्रेति । ईश्वरे आत्मशब्दप्रयोगे इत्यर्थः । तद्व्यक्तित्वमेव-ईश्वरगततद्व्यक्तित्वमेवेत्यर्थः । एवं च जीवे आत्मशब्दप्रयोगः सुखादिसमवायिकारणतावच्छेदकतया सिद्धामात्मत्वजातिमादाय ईश्वरे तु तद्व्यक्तित्वमादायेति नानार्थत्वमात्मशब्दस्येतिभावः ।

(४) तथा—प्रवृत्तिनिमित्तम् ।

(५) मोक्षेति । मोक्षं प्रति जीवेश्वरतत्त्वज्ञानहेतुतया मोक्षकारणतावच्छेदकतयाभयसाधारणजातिसिद्धिरिति भावः ।

उभयसाधारणजातिसिद्धेः उभयतत्त्वज्ञानस्य मोक्षहेतुत्वात् । किं च 'तदात्मानमेव वेदाहं ब्रह्मास्मी'ति 'यस्मात् क्षरमतीतोऽहमि'त्यादिश्रुतिस्मृतिभिर्हे(१)त्वसिद्धेश्च । तत्राहङ्काराभावाल्लाक्षणिकत्वं तेषामिति चेत् श्रुत्याद्यनुरोधादहङ्कारमेव त्यज ।

अत एव—

शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत् ।

इति स्मृतिरपि, अहमित्यनुभवेऽहङ्कारस्य भाने हेतुर्विरुद्ध एव स्यादिति ।

## परस्परं जीवभेदनिरूपणम् ।

एवं जीवा अपि परस्परं भिद्यन्ते विरुद्धधर्म्माध्यासात् । तथा हि सुखित्वादुःखित्वजाग्रत्सुषुप्तिकर्माधिकारानधिकारबन्धमोक्षादेर्विरुद्धतया एकदा एकस्मिन् धर्मिण्यसमावेशात् को वा समित्पाणिर्गुरुमुपेयात् गुरोर्ज्ञत्वे शिष्यस्यापि ज्ञत्वं शिष्यस्याज्ञत्वे गुरोरपिवाऽज्ञत्वं स्यात् ।

(२)केचित्तु (३)ध्वंसाप्रतियोगिदेवदत्ताहमनुभवविशेष्यः न

---

(१) हेत्वसिद्धेश्चेति । ईश्वरो नात्मा अहमित्यनुभवेऽप्रकाशमानत्वादिति हेतुःस्वरूपासिद्धः अहं ब्रह्मास्मीति श्रुत्याऽहमित्यनुभवे ईश्वरस्य प्रकाशमानत्वावगमात् ।

(२) केचित्त्विति । भेदधिक्कारकारास्त्वित्यर्थः ।

(३) ध्वंसाप्रतियोगीति । ध्वंसाप्रतियोगी यो देवदत्ताऽहमनुभवविषयभूतो विशेष्यः स पक्षः । भौतिकातिरिक्तो यो यज्ञदत्ता-

(१)भौतिकातिरिक्तयज्ञदत्ताहमनुभवविशेष्यप्रतियोगिकानौपाधिकभेदवान् (२)कार्य्यकारणातिरिक्तत्वे सति अहमनुभवविशेष्यत्वात्

---

हमनुभवविशेष्यस्तत्प्रतियोगिको निरुपाधिको भेदो घटादौ प्रसिद्धः स च पक्षे द्वैतिभिः—स्वीकृतः वेदान्तिभिश्च न स्वीकृत इति तदभावः साध्यते इति न सिद्धसाधनम् । देहादेरप्यहमनुभवविशेष्यत्वात् तत्र वाधवारणाय ध्वंसाप्रतियोगीति पक्षविशेषणम् । यज्ञदत्ताहमनुभवविशेष्ये तदीयात्मनि सिद्धसाधनवारणाय पक्षे देवदत्तपदं प्रयुक्तम् घटे घटत्वमित्यादिपरोपेतदेवदत्तानुभवविशेष्ये घटत्वादौ वाधवारणायाहमनुभवेत्युक्तम् । तद्विषयमात्रस्य पक्षत्वेऽहंत्वस्यापि तद्विषयत्वेन तत्र बाधः स्यात्तन्निवारणायाहमनुभवविशेष्य इत्युक्तम् ।

( १ ) भौतिकेति । देवदत्तात्मनि यज्ञदत्ताहमनुभवविशेष्यतदीयदेहेन्द्रियप्रतियोगिकनिरुपाधिकभेदस्वीकारात्तद्राहित्यसाधने बाधः स्यात्तद्वारणाय साध्ये भौतिकातिरिक्तेत्युक्तम् । देवदत्ताहमनुभवविशेष्ये तदीयात्मप्रतियोगिकनिरुपाधिकभेदस्य परमतेऽपि तत्राभावात् सिद्धसाधनतावारणाय यज्ञदत्तेति विशेषणम् । यज्ञदत्तानुभवविशेष्यघटादिप्रतियोगिकनिरुपाधिकभेदस्य पक्षे सत्त्वात्तदभावसाधने बाधः स्यात् तद्वारणाय साध्येऽप्यहमनुभवेत्युक्तम् । आत्मत्वस्यापि तद्विषयत्वात् तत्प्रतियोगिकभेदाभावसाधने बाधः स्यात्तद्वारणाय अहमनुभवविशेष्येत्युक्तम् । तद्विशेष्ययज्ञदत्तात्मप्रतियोगिकसोपाधिकभेदस्य पक्षे स्वीकारात्तन्निषेधे बाधः स्यात्तद्वारणायानौपाधिकेत्युक्तम् ।

( २ ) तत्र हेतुद्वयमाह—कार्यकारणेति । स्थूलसूक्ष्मशरीरे कार्यकारणपदार्थः । शरीरेन्द्रियादिषु व्यभिचारवारणाय तद्व्यतिरिक्तत्वविशेषणम् । घटादावात्मत्वे च तद्वारणायाहमनुभवविशेष्यत्वादित्युक्तम ।

(१)स्वावृत्तिज्ञानविषयत्वाद्वा यज्ञदत्तवत् । शरीरे आत्मनि च बाधवारणाय शरीरेऽहङ्कारे च व्यभिचारवारणाय च पक्षसाध्यहेतुषु आद्यविशेषणत्रिकम्, अप्रसिद्धिवारणाय स्वावृत्तीति, शरीरस्य स्वावृत्तिज्ञानविषयत्वान्न व्यभिचारः ।

न च विष्णुमित्रादौ व्यभिचारः, पक्षसमत्वात् । न चाप्रयोजकत्वम्, अभेदे लाघवस्यैव विपक्षबाधकत्वात् बन्धमुक्तादिव्यवस्था त्वन्तः करणविशिष्टभेदेप्युपपद्यते

अथैतत्तच्छब्दोपलम्भकत्वानुपलम्भकत्वादिविरुद्धधर्मसमावेशेन श्रोत्राणामपि वास्तवभेदः स्यान्नौपाधिक इति चेन्न भेदस्याव्याप्यवृत्तित्वमत्यन्तभावस्येवानुभवबलेनैव कल्पनीयमित्यदोषात् ।

किंच सर्वेषामेव भेदहेतूनां 'नान्योऽतोस्तिद्रष्टे'ति श्रुत्या

(२)आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैकोप्यनेकः स्याज्जलाधारेष्विवांशुमान् ॥

इति याज्ञवल्क्यवचनेन—

ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः ।

---

(१) स्वावृत्तीति । पक्षदृष्टान्तयोरसिद्धिसाधनवैकल्यपरिहाराय स्वावृत्तीतिविशेषणम् ।

(२) आकाशमिति । अज्ञानविषयीकृतं चैतन्यमीश्वरः, अज्ञानाश्रयीभूतं च जीव इति वाचस्पतिमिश्राः अयं चावच्छेदवादः तदभिप्रायेणाद्यो दृष्टान्तः । अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः, बुद्धिप्रतिबिम्बितं चैतन्यं जीवः, अज्ञानोपहितं बिम्बचैतन्यं शुद्धमिति संक्षेपशारीरककारः—अयं च प्रतिबिम्बवादः, एतदभिप्रायेण जलाधारेष्विवांशुमान् इति दृष्टान्तः । इति मतभेदो मिथ्यैव इति भावः ।

सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ।।

इति भारतवचनादिना बाधश्चेत्याहुः ।

तन्न यज्ञदत्तसुखाद्यधिकरणत्वस्योपाधित्वात् ।

न च सुषुप्तिकालीने मुक्तिकालीने च तस्मिन् साध्याव्यापकत्वं तदानीं सुखाद्यभावादिति वाच्यं सुखाभावेऽपि तदधिकरणताया-स्तदानीमपि सत्त्वात् ।

वस्तुतस्तु व्याप्तौ तदानीं साध्यसत्त्वं नापेक्षितं वह्निप्रागभा-वादेरपि वह्निव्याप्यत्वात् । अत एव सामुद्रिकोक्तरेखादिना सुखा-द्यनुमानम् ।

न च यदवच्छेदेन साध्यं तदवच्छेदेनोपाध्यनङ्गीकारे पक्षे साध्यसत्त्वेऽपि को विरोध इति वाच्यं प्रमाणान्तराभावादनुमानस्य चोपाधिग्रस्तत्वात् । देवदत्तसुखाद्यनधिकरणत्वं चोपाधिः, घटा-दावपि सत्त्वात्समव्याप्तः, साध्यसमव्याप्तत्वे सति साधना व्यापक उपाधिरिति प्राचीनलक्षणमादाय तथात्वमिति चेन्न-स्तस्य (१)रूपरुत्ययाम तत्त्वात् ? ।

कि चाहमनुभवो यद्यहङ्कारविषयकोऽनुभवस्तदा पक्षसा-ध्यहेत्वप्रसिद्धिर्मन्मते, अहंकाराविषयश्चेत् त्वन्मते तथा ।

किंचाहमनुभवविशेष्यो यद्यहंकारस्तदा बाधः यद्यहंकाराव-च्छिन्नस्तदापि यज्ञदत्ताहंकारावच्छिन्नभेदसत्त्वाद्बाधः । असौ भेद-

(१) अतत्त्वादिति । तथाच चिन्तामणिः—'नापि साध्यसम-व्याप्तत्वे सति साधनाव्यापकत्वमुपाधित्वम्, दूषकतायां साध्यव्या-प्यत्वस्याप्रयोजकत्वाच्च' इति ।

स्त्वौपाधिकः(१) शुद्धप्रतियोगिकस्तु नास्त्येवेति चेत्तर्हि साध्येऽनौपाधिकत्वं व्यर्थम् ।

किंच शुद्धप्रतियोगिको भेदस्त्वन्मतेऽप्रसिद्धः ।

तद्व्यक्तित्वावच्छिन्नभेदो व्यावहारिकः प्रसिद्ध एवेति चेन्न त्तद्व्यक्तित्वस्य(२) तत्तदन्तःकरणादिरूपत्वात्तदवच्छिन्नभेदस्य च सत्त्वात् ।

अन्यदेव तत्त्वमिति चेन्न तवात्मनो निर्धर्मकत्वात् कल्पितस्य तु सुषुप्तौ विलयनात् तदवच्छिन्नभेदोऽप्यावश्यकः ।

किंच धर्माधर्मौ न शरीरस्य तस्य विनाशित्वात् । नापि मनसः सुषुप्तौ तस्यापि नाशात् ।

न तस्य नाशः किन्तु सूक्ष्मरूपेणावस्थानमिति चेन्न— सूक्ष्मरूपेणापि तस्यावस्थानासंभवात् । 'सुषुप्तिकाले सकले विलीन' इत्यनेन विरोधात् ।

कारणरूपेण तिष्ठतीति चेन्न कारणरूपेणापि तस्यावस्थानासम्भवात् ।

---

(१) औपाधिक इति । कृशोऽहमिति प्रतीतिगोचरः कार्श्यादिर्यथा शरीराद्युपाधिकतयाऽऽत्मनि कल्पितः तथा नाहं यज्ञदत्त इति प्रतीतेरन्वयव्यतिरेकाभ्यां शरीरादिप्रतिभासाधीनत्वात्तद्गोचरो भेदः शरीरोपाधिक इति भावः ।

(२) तत्तदन्तः करणरूपत्वेति । यथा घटगततद्व्यक्तित्वं तद्घटानुयोगिकसमवायेन घटत्वरूपं तथाऽन्तःकरणावच्छिन्नगततद्व्यक्तित्वं तदन्तः करणावच्छिन्नानुयोगिकावच्छेदकतासंबन्धेन तदन्तःकरणरूपमिति भावः ।

तत्कारणं तिष्ठतीति चेत् किमागतं तस्य, तस्माद्धर्माधर्माश्रयत्वमात्मन एव, न चात्मैक्ये तत्संभवति ।

ननु सुषुप्तौ धर्माधर्मयोर्विनाशात् कथं पुनः सुखादिकमिति चेदात्मानमुपालभस्व ।

श्रुतेः का गतिरिति चेत् उक्तैव, सकलेन्द्रियाणां फलाजननरूपविलीनत्वस्यैव तदर्थत्वात्

अपि च अन्यदीयसुखादिकमप्यन्योऽनुसंदधीत । न च (१)त्वन्मतेऽपि जन्मान्तरीयमनुसन्दधीतेति वाच्यं, तत्सुखादेरिदानीमभावात् ।

स्मर्य्यत इति चेन्न उद्बोधकाभावात् (२)संस्काराभावाद्वा । एकात्मवादानभ्युपगमे एकात्मवाद( निरूपण )दूषणस्याश्रयासिद्धिरिति चेत् सूक्ष्मेक्षिकेयमायुष्मतः कथमन्यथा चैत्रसुखं मैत्रः साक्षात् कुर्यादित्यत्र दूषणमिदमभिदधासि ।

अदृष्टविशेषवशात् तथानुसन्धानं स्यादिति चेन्नादृष्टस्याप्यविशिष्टत्वात् ।

न च तत्तददृष्टस्य तत्तच्छरीरावच्छिन्नसुखादिहेतुत्वं न दुर्व

(१) त्वन्मते-नैयायिकमते । सुखादेरिति । 'अध्यक्षो विशेषगुणयोगत' इति नयेन आत्मनः सुखादिमत्तयैव प्रत्यक्षत्वाभ्युपगमादिति भावः ।

(२) संस्काराभावादिति । जन्मान्तरस्य तन्नाशकत्वादिति भावः ।

चमिति वाच्यम् सुषुप्तावदृष्टनाशात् बालादिदेहभेदात् (१)कायव्यूह-स्थले चानन्तकार्य्यकारणभावप्रसङ्गात् ॥

## अवस्थाभेदेऽपि शरीरैक्यम् ।

यच्च(२) बालेनोक्तम् बालादिशरीरं न भिद्यते प्रत्यभिज्ञानात् त(३)ज्जनकादृष्टे सति तन्नाशायोगात् नाशकान्तराभावाच्च, प्रथमशरीरे क्लृप्तजनकादिव्यापाराभावात् द्वितीयादिशरीरस्य ब्राह्मणादेरनुत्पत्तौ(४) जातिगोत्रादिव्यवस्थापि न स्यात् परिमाणभेदस्याश्रयभेदा(५)नियतत्वादिति ।

---

(१) कायव्यूहेति । एकस्मिन्नेवात्मनि युगपच्छरीराणां नानात्वेन तत्तच्छरीरावच्छिन्नसुखं प्रति तत्तददृष्टस्य कारणतया नानाकार्यकारणभाव इति भावः ।

(२) बालेनेति । भेदधिक्कारकृतेत्यर्थः ।

(३) तज्जनकादृष्टेति । एकस्य न युगपदनेकदेहयोगः अदर्शनादप्रयोजकत्वाच्च क्रमेण च देहभेदाभ्युपगमे पूर्वदेहनाशादेव उत्तरदेहोत्पत्तिर्वक्तव्या, तत्र किं पूर्वदेहनाशे प्रारब्धकर्मनाशः कारणं समवाय्यसमवाय्यन्यतरनाशो वा नाद्यः तस्य यावज्जीवभोगोत्पादनाय शरीरारम्भकत्वेन तत्पूर्वं नाशायोगात् द्वितीयस्त्वनुपलब्धिपराहतः । न च बाल्यादिशरीरसंस्थानभेदात्तदारम्भकावयवसंयोगनाशोऽभ्युपेय इति वाच्यम् सत्यपि पूर्वसंयोगेऽवयवान्तरसंयोगादेव संस्थानभेदोपपत्तेः । तदेवाह-नाशकान्तरेति ।

(४) ननुद्वितीयशरीरं कारणान्तरादेवोत्पद्यतामित्यत आह जातीति । ब्रह्मणब्राह्मणीजन्यत्वस्यैव ब्राह्मण्यप्रयोजकत्वादिति भावः ।

(५) अनियतत्वादिति । एकस्मिन्नपि वस्तुनि मूले स्थूलोऽग्रे सूक्ष्म इति नानापरिमाणदर्शनादिति भावः ।

## अवस्थाभेदेऽपि शरीरैक्यवादस्य निराकरणम् ।

तन्न प्रत्यभिज्ञायास्तज्जातीयत्वावलम्बनत्वात् सेयं दीपकलिका तदेवौषधमितिवत् । (१)तज्जनकादृष्टस्य नाशाप्रतिबन्धकत्वात् नह्यश्वजनकादृष्टे सत्यश्वो न नश्यति तज्जनकादृष्टे सति तदुत्पत्तिः स्यादेव सुखधारावत् । शुक्रशोणितद्वारा पित्रोर्व्यापारसम्भवान्न ब्राह्मणत्वाद्यनुपपत्तिः अवयवनाशोत्पादाभ्यामवयविनाशोत्पादयोरावश्यकत्वात् ।

## आत्मनानात्वे पूर्वपक्षः ।

नन्वात्मनामैक्यं लाघवात्कल्प्यम् इत्थं च ज्ञानसुखाद्युपपादकान्यन्तःकरणानि कल्प्यन्ते । ज्ञानसुखादिकं चान्तःकरणधर्म आत्मगतत्वेन (२)गृह्यते अन्तःकरणावच्छिन्नभेदाज्जीवभेदो व्यवह्रियते श्रोत्रभेदवत् । तदनवच्छिन्नश्चेश्वरो महाकाशस्थानीयः । अन्तःकरणत्वेनैव जन्यज्ञानत्वाद्यवच्छिन्नजनकत्वम् ।

## आत्मनानात्वस्थापनम् ।

मैवं ज्ञानाद्याश्रयस्यैव विचार्यत्वात् तस्य भेदः सिद्ध एव लाघवाच्चैतन्यशून्यं यत्किञ्चित् (३)सिद्ध्यतु नाम किन्तेन, चैत-

(१) तज्जनकेति । द्वितीयशरीरजनकेत्यर्थः ।

(२) गृह्यते इति स्वाश्रयावच्छिन्नत्वरूपपरम्परासंबन्धेनेतिशेषः । ज्ञानादीनामन्तःकरणधर्मत्वे च 'कामः संकल्पो विचिकित्सा धीर्ह्रीर्भीरित्येतत्सर्वं मन एव' इति श्रुतिरेव मानम् ।

(३) सिध्यतु नामेति । तथा च तस्यैवात्मत्वमस्त्विति भावः ।

न्यस्य ज्ञानादिरूपत्वात् । किञ्च दुःखस्यानात्मधर्मत्वे तस्य द्वेष्यत्वानुपपत्तेर्मोक्षे प्रवृत्तिश्च न स्यान्नवाऽन्तः करणं प्रवर्त्तेत तस्य (१)मोक्षाऽसम्भवात् त्वया तस्यापि तदानीं नाशाभ्युपगमात् स्व-नाशार्थं प्रवृत्त्ययोगात् । तदुक्तं—

अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥ इति ।

किञ्च(२) परकीयसुखाद्यनुसन्धानं स्यात्, अज्ञानं प्रतिबन्धकमितिचेत् स्वानन्दमपि न साक्षात्कुर्यात् । किंचान्तःकरणाना-मैक्यमात्मनां भेद इत्येव किन्न स्यात् नह्यात्मनि विवदावहे येन तत्कल्पनं लाघवादेकं विषयीकुर्य्यात् अपि तु सुखदुःखाद्युपपादकं विचारयावस्तत्र च साक्षादुपपादक आत्मभेदः कल्प्यते । अनन्त मनसामपि कल्प्यत्वात्तव गौरवमिति चेदसंख्यानां विनश्वरमनसां तदवयवधाराणां च कल्पने तवैव गौरवात् ।

मनोनित्यत्वपक्षे तावतामात्मनां मनसां च कल्पने गौरवादा-त्मैक्यं(३)स्यादिति चेन्न लाघवान्मनस ऐक्यसम्भवात् । तथा सति तस्य विभुत्वं स्यादिति चेत् किन्नश्छिन्नम् ।

---

(१) मोक्षासम्भवादिति । मोक्षो हि आत्मनो नान्तः करण-स्येति तत् कथमन्यस्य मोक्षार्थं यतेतेति भावः ।

(२) किंचेति । आत्मनामेकत्वेन परकीयसुखानुसंधानप्रसङ्ग इति भावः ।

(३) आत्मैक्यमिति । मनोभेदादेव बन्धमाक्षसुखित्वदुःखि त्वादिव्यवस्थोपपत्तेः ।

सुषुप्त्यादिकं कथमुपपद्यतामिति चेददृष्टविशेषादिति गृहाण ।
मनस्तर्हि न सिद्ध्येदिति चेदसति प्रमाणे न सिद्ध्येदेव ।
श्रुतिरस्ति मानमिति चेत्तत एव सिद्ध्यतु ।

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इत्यादिका श्रुतिर्जन्यत्वमेव वदतीति चेन्न तत्र मननोपहितमिन्द्रियं मन इत्युच्यते संकल्पचिन्तादिरूपविलक्षणं ज्ञानं मननं तस्य जन्यत्वान्मनसोपि विशिष्टस्य जन्यत्वमेव स्यात् पुत्रो मे पण्डितो जात इतिवत् एवं शरीरसंबन्धादात्मनोजन्यत्वं कथमन्यथा—

'तदात्मानं स्वयमकुरुत'

शतधा सहस्रधा चैव तथा शतसहस्रधा ।
कोटिशश्च करोत्येष प्रत्यगात्मानमात्मना ॥

इत्यादयः श्रुतिस्मृतयः संगच्छन्ते ।

कथं तर्हि 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः,' इत्यनेन विकारित्वं मनस उच्यते इति चेत्तत्रापि मनसो ज्ञानोपयोगित्वपरत्वात् । अत एवाग्रे (१)'एवं सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाभूत् सान्नेनोपसमाहिता प्राज्वालीत्तयैतर्हि वेदानुभवस्यन्नमयं हि सोम्य मन' इत्यनेनानुभवहेतुत्वमेव प्रदर्शयति ।

(१) एवं सोम्येति । हे सोम्य ते तव षोडशकलानां मध्ये एका कलातिशिष्टाभूत् सातिशिष्टा कलान्नेनोपसमाहितोपचिता प्राज्वालीत् प्रज्वलिता संवर्धिता तया च वर्द्धितयैतर्हि इदानीं वेदानुभवस्युपलभसेऽतोऽन्नमयं हि सोम्य मन इत्यर्थः ।

वस्तुतस्तत्(१) सर्वं तेजोबन्नानां स्तावकम् अन्यथा देवानां नारकिणां वानुभवो न स्यादन्नभक्षणाभावेन मनसोऽभावान्न स्याच्च सुषुप्तोत्थितस्य विनान्नभक्षणं ज्ञानादिकं सुषुप्तावन्तःकरणनाशात् ।

ननु नान्योतोऽस्ति द्रष्टेति श्रुतिरेवाभेदवादिनी ( जीवभेदं ) व्युदस्यतीति चेन्न तस्य ईश्वरस्तावकत्वात् ।

वस्तुतस्तु 'स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमि'त्यादिमूलक इन्द्रियात्मवादः स्यादिति तद्व्युदासायेन्द्रियाधिष्ठात्रीणां देवतानामपि प्रेरकः स एवेति प्रदर्शनाय नान्योऽस्तीत्यादि । अन्यथा नान्योऽतोऽस्ति श्रोता नान्योतोऽस्ति मन्तेत्यादीनां (२)वैयर्थ्यं स्यात् स्याच्च य आत्मनि तिष्ठन्नित्यनेन विरोधः ।

किं च (३)ताच्छील्यार्थककृदन्तेन द्रष्टेत्यनेन दर्शनशीलो नित्यज्ञानवानुच्यतेऽन्ये तु न तथा । एवं श्रोतेत्यादावपि श्रवणं शब्द-

---

( १ ) तदिति । यदणिष्ठं तन्मन इत्यादिकमित्यर्थः । श्रुतेः स्तावकत्वमनङ्गीकृत्य यथाश्रुतार्थकत्वेन मनसोऽन्नजन्यत्वाङ्गीकारे दूषणमाह—अन्यथेति ।

( २ ) वैयर्थ्यमिति । नान्यो द्रष्टेत्येकनिषेधेनैव गतार्थत्वात्; मम तु द्रष्टा चक्षुरधिष्ठाताऽन्योनास्तीत्युक्तावपि श्रोत्रधिष्ठाता कश्चित्-स्यादिति तद्वारणाय द्वितीयनिषेधावश्यकत्वमिति भावः ।

( ३ ) ताच्छील्येति । 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इत्यधिकारविहितेन 'तृन्' इति सूत्रविहिततृनन्तेनेत्यर्थः ।

साक्षात्कारः । (१)श्रोत्रजन्यतावच्छेदिका त्ववान्तरजातिः,(२)इत्थमेव 'स शृणोत्यकर्ण' इत्यादि संगच्छते ।

## भास्कराचार्यसंमतिः ।

भास्कराऽचार्यास्तु 'एष त आत्माऽन्तर्याम्यमृत' इत्युक्त्वा 'नान्योतोऽस्ति द्रष्टे'त्यनेना'न्तर्य्यामी द्रष्टा नान्य' इति निषेधति प्रकृतत्वात् । अन्यथा य आत्मनि तिष्ठन्निति भेददर्शनमनुपपन्नं स्यात् 'यं पृथिवी न वेदे'ति देवताक्षेत्रज्ञातॄनुपन्यस्य तदपलापो न युज्यत इत्याह ।

'आकाशमेकं हि यथेति, याज्ञवल्क्यवचनस्य 'एक एव हि भूतात्मे'त्यत्रोक्त(३) एवार्थो वेदितव्यः ।

ननु—

यद्येवं स कथं ब्रह्मन् पापयोनिषु जायते ।
ईश्वरः सन् कथं भावैरनिष्टैः संप्रयुज्यते ॥ इति—

---

(१) नन्वीश्वरीयशब्दसाक्षात्कारस्य नित्यत्वाङ्गीकारे शब्दसाक्षात्कारत्वजातेर्नित्यानित्यवृतितया श्रोत्रजन्यतावच्छेदकत्वं न स्यादित्यत आह-श्रोत्रेति । अवान्तरजातिः—शब्दसाक्षात्कारत्वव्याप्या जन्यशब्दसाक्षात्कारमात्रवृत्तिः जातिरित्यर्थः ।

(२) इत्थमेव-ईश्वरीयशब्दसाक्षात्कारस्य नित्यत्वादेवेत्यर्थः । जन्यत्वे श्रवणापेक्षाऽवश्यमेव स्यादिति भावः ।

(३) उक्त इति । 'एक एवहि भूतात्मे'ति वचनम् अवस्थाभेदेन देवदत्तशरीरस्य भिन्नत्वेपि आत्मैक्यपरम् न तु देवदत्तयज्ञदत्तशरीरात्मनोरैक्यपरमित्येवं व्याख्यातं तथा 'आकाशमेकं हि'इति वचनमपि अवस्थाभेदेन शरीरभेदेऽप्यात्मैक्यपरमिति भावः ।

ऋषीणां प्रश्नानुसारादैक्यं स्यादिति चेन्न प्रश्नस्या(१)ज्ञान मूलकत्वात् । सिद्धान्ते तु—

(२)अन्त्यपक्षिस्थावरतां मनोवाक्कायकर्मजैः ।
दोषैः प्रयाति जीवोऽयं भ्रमन् योनिशतेषु वै ॥

इत्यनेन जीवस्यैव संसारित्वं नेश्वरस्येत्युक्तम् । अन्यथा ईश्वरः कथं संसारी भवेदित्यत्र सिद्धान्त एव न स्यात् । अत एवोक्तं भास्कराचार्यैः 'स सर्वज्ञः सर्वशक्तिः सन् कस्मादात्मानं संसारिणं कुर्य्यात् यो हि परतन्त्रः स बन्धनागारं प्रवेश्यत' इति ।

अत एव याज्ञवल्क्येन स्पष्टत्वार्थं—

(३)यथा हि भरतो वर्णैर्वर्णयत्यात्मनस्तनुम् ।
नानारूपाणि कुर्वाणस्तथात्मा कर्मजां तनुम् ॥

इत्युक्तम्, अनेन हि यथा भरत एकं रूपं विहाय रूपान्तरं गृह्णाति तथात्मापीति स्पष्टं प्रतीयते ।

ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ॥

---

(१) अज्ञानेति । उपासनापराया अपि 'अहं ब्रह्मास्मि' इति श्रुतेर्वास्तवतात्पर्यमजानतोऽद्वैतिनः ईश्वर एव संसरतीति भ्रान्तिस्तदनुरोधेन ऋषीणां प्रश्नः । अज्ञानमूलकत्वादित्यस्य भ्रान्तशिष्याज्ञाननिरासार्थकत्वादित्यर्थः । ऋषीणां तु नाज्ञानं सर्वज्ञत्वादिति तत्त्वम् ।

(२) भरतः—नटः । वर्णैः रक्तनीलादिभिः । वर्णयति—रचयति ।

इति वचनं भेदमेव प्रतिपादयति । यो ममान्तरात्मा यश्च तवान्तरात्मा ये च मदात्मभिन्नास्त्वदात्मभिन्नाश्चात्मानः सर्वेषां साक्षी असौ परमात्मेत्यर्थस्य स्पष्टतरत्वात् ।

अव्युच्छिन्नश्चिदात्मैकः पुमानस्तीह नेतरत् ।
स सङ्कल्पवशाद्बद्धो निःसङ्कल्पश्च मुच्यते ॥

इत्यस्य नेतरच्चिदात्मकमिह शरीरेऽस्तीत्यर्थः । तेन(१)भूतचैतन्यमिन्द्रियचैतन्यं च नास्तीत्युच्यते ।

(२)बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ।
गुणस्य मायामूलत्वान्न मे बन्धो न मोक्षणम् ॥

इति भागवतवचनात् ।

तमोगुणेन(३)सम्मूढाः बन्धमोक्षौ वदन्ति मे ।
तमसोऽज्ञानमूलत्वान्न मे बन्धो न मोक्षणम् ॥

---

(१) भूतचैतन्यमिति । भूतानामिन्द्रियाणां वा ज्ञानाश्रयत्वे एकस्मिन्नेव शरीरे नानाचेतनानि स्युस्तथा च किंचिच्चेतनं स्थातुं किंचिद् गन्तुं किंचिच्छ्रोतुं किंचिद् द्रष्टुं च यतेतेति शरीरोन्माथ एव स्यात् एकस्यैवेन्द्रियस्य तथात्वे च अन्धानां मूकानां च मृत्युरेव स्यात् तस्मान्न भूतानि न वेन्द्रियाणि चेतनानि इति शरीरेन्द्रियादिभ्याऽतिरिक्त आत्मेति सिद्धम् । इत्यभिप्रायेणैकस्मिञ्छरीरे नानाचेतनवादः 'अस्तीह नेतरत्' इत्यनेन निषिद्धः ।

(२) गुणत इति । कल्पनया इत्यर्थः । भ्रान्त्येति यावत् ।

(३) तमोगुणेनेति । भ्रमजनकसंस्कारेण संमूढा भ्रान्ताः तमो भ्रमजनकसंस्कारः अज्ञानस्य भ्रमस्य मूलं कारणमित्यर्थः ।

इति भविष्यपुराणेन व्याख्यातम् । अत एव व्याख्येत्यपि सङ्गच्छते। 'यदा सर्वेषु देहेषु पुमानेको व्यवस्थित' इत्यनेनापि(१) पूर्वापरशरीरसम्बद्ध एक आत्मेति प्रतिपाद्यते ।

सर्वपदस्य(२) सङ्कोचः स्यादिति चेत्(३)घटपटादीनामनुपादानात् त्वन्मतेऽपि तथैव ।

वस्तुतस्त्वन्तर्यामितया सर्वभूतसम्बन्धो भगवति प्रतिपाद्यते तेन वाक्येनेति । इत्थश्च 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य' इति श्रुतिर्जीवब्रह्मणोर्जीवानां वा भेदं प्रतिपादयन्ती(४) निराबाधा ।

नचैकस्यैव जुषमाणत्वं हीनत्वं च पूर्वापरकालभेदादविरुद्धमिति न वस्तुभेद इति वाच्यम्, अनुशेते जहातीति वर्त्तमानतया द्वयोरुपादानात्, एवं 'भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' 'सर्व एवात्मानः समर्पिताः' 'बहवो ज्ञानतपसा पूता मद्भावमा-

---

(१) पूर्वापरेति । बाल्याद्यवस्थाभेदभिन्नेत्यर्थः ।

(२) सर्वपदस्येति । सर्वेषु देहेषु इत्यत्र सर्वपदस्य एकैकात्मसंबन्धिशरीरपरत्वे संकुचितार्थत्वं स्यादिति सर्वशरीरपरत्वमेव युक्तमिति भावः ।

(३) घटपटादीनामिति । त्वयापि हि सर्वपदेन घटादयो न गृह्यन्ते इति संकुचितार्थत्वं स्वीकृतमेव, देवदत्तो दधि भुङ्क्ते यज्ञदत्तः क्षीरं विष्णुमित्र ओदनं चैत्रस्तु सर्वम्' इत्यत्रेवेति भावः ।

(४) निराबाधेति । एकात्मवादपक्षे च नोपपद्येत एकस्यैवात्मनो जुषमाणत्वस्य हीनत्वस्य चासंभवात् ।

गताः' इत्यादयः श्रुतिस्मृतयो भेदस्य साहायकं सम्पादयन्ति(१) ।

## अनिर्वचनीयतावादः ।

यदपि तद्वति तत्प्रकारकत्वादिकं न प्रामाण्यम् उत्पत्तिकालीनो घटो गन्धवान , मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादावतिव्याप्त्यादिदूषणगणग्रासात् ।

न च सकललोकसिद्धौ प्रमाबुद्धिव्यवहारौ कथं समर्थनीयाविति वाच्यं वैतण्डिकस्य पर्य्यनुयोगानर्हत्वात् ।

सुहृद्भावेन पृच्छतः किमुत्तरमिति चेच्छृणु—

(२)समस्तलोकशास्त्रैकमत्यमाश्रित्य नृत्यतोः ।
का तदस्तु गतिस्तत्तद्वस्तुधीव्यवहारयोः ॥
(३)उपपादयितुं तैस्तैर्मतैरशकनीययोः ।
अनिर्वक्तव्यतावादपादसेवागतिस्तयोः ॥

तस्मात्प्रमात्वमनिर्वचनीयमादाय लोको व्यवहरति । नित्याविनाशिनिरुपाधिवस्तुविषयकत्वं तात्त्विकप्रमात्वम् , वेदान्तानां च

---

(१) संपादयन्तीति । एकात्मवादपक्षे च बहुवचनानुपपत्तिः स्यादिति भावः ।

(२) तत् तस्मात समस्तलोकशास्त्रयोरैकमत्यमाश्रित्य नृत्यतोर्भासमानयोस्तत्तद्वस्तुव्यवहारतत्तद्धीव्यवहारयोः का गतिरस्त्वित्यर्थः ।

(३) तैस्तैर्मतैरुपपादयितुमशकनीययोः ( तत्तद्वस्तुधीव्यवहारयोः ) अनिर्वक्तव्यतापादसेवा गतिर्नान्येत्यर्थः ।

तादृ(१)शज्ञानकरणत्वात्तात्त्विकं प्रामाण्यं मायौपाधिकसत्त्वार्थविषयज्ञाननिष्ठमनिर्वचनीयमेव ।

अज्ञातार्थनिश्चयत्वमेव प्रामाण्यं (२)सर्वत्रानुगतं ब्रह्मज्ञानस्यापि तथात्वात् ।

न च (३)भ्रमेऽतिव्याप्तिः, तद्विषयस्य(४) भ्रममात्रकालीनस्याज्ञातत्वाभावात् ।

यद्यपि घटादावपि नाज्ञातत्वम्(५) अज्ञानस्य पूर्वसिद्धत्वादुत्तरवर्त्तिनस्तद्विषयत्वाऽयोगात् तथापि घटाद्यवच्छिन्नब्रह्मचैतन्यस्याज्ञातत्वात् (६)घटादेरज्ञातत्वम् । स्मृतिव्यावर्त्तनायाज्ञातत्वं,संश-

---

(१) तादृशेति । अखण्डार्थेत्यर्थः ।

'संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।

उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता' ॥ इति ।

(२) सर्वत्रेति । व्यावहारिके प्रातिभासिके च प्रामाण्ये इत्यर्थः

(३) नचेति । इदं रजतमितिभ्रमे अनिर्वचनीयरजतस्य पूर्वमज्ञातत्वेन अज्ञातार्थविषयकनिश्चयत्वसत्त्वादतिव्याप्तिरित्यर्थः ।

(४) तद्विषयस्येति । अनिर्वचनीयरजतादेर्भ्रमकाल एव सत्त्वेन अज्ञातत्वस्याभावादिति भावः ।

(५) नाज्ञातत्वमिति । अयंभावः—घटादिरपि अज्ञानकल्पितः इति घटादेरज्ञानजन्यत्वं वाच्यमिति कारणस्य अज्ञानस्य पूर्वं सत्ता वक्तव्या इति घटो न घटविषयकाज्ञानजन्यः घटोत्पत्तेः प्राक् अज्ञानस्य घटविषयकत्वासम्भवात् उत्तरवर्तिनश्च तद्विषयत्वायोगात् इति घटस्यअज्ञातत्वमिति ]

(६) घटो न घटाज्ञानजन्यः घटोत्पत्तेः पूर्वं घटाज्ञानासम्भवात् नापि निर्विषयकाज्ञानजन्यः निर्विषयकाज्ञानस्यासम्भवादतः

यव्यावृत्तये निश्चयेति ।

न च धारावाहिकबुद्धावव्याप्तिः इष्टत्वात् (१)उपनीततत्तत्क्षणादिविषयत्वाद्वा प्रामाण्यम् , शब्देन तु धारावाहिकबुद्ध्यजननान्नाव्याप्तिशङ्काः जन्मान्तरे वेदार्थस्य ज्ञातत्वेन तस्मिञ्जन्मन्यज्ञातत्वं विवक्षणीयं वेदान्तवाक्ये तद्भावाच्च, पूर्वदिने ज्ञातस्योत्तरदिने ज्ञानमप्रमा स्यादित्यत्रेष्टापत्तिः। यावन्ति ज्ञानानि(२) तावन्त्येवाज्ञानानीतिमते तत्राप्यज्ञातत्वसत्त्वाच्च न दोषः ।

न च (३)मननादीनामप्रमात्वापत्तिरिति वाच्यं, श्रवणेनाज्ञानानपनयात् तथा सत्यमीषां (४)वैयर्थ्यापत्तेश्चावश्यकत्वात्(५),

---

घटावच्छिन्नचैतन्याज्ञानजन्यः घट इति अज्ञानस्य आश्रयः विषयश्च चैतन्यमेव । तदुक्तं संक्षेपशरीरके—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥ इति ।

(१) उपनीतेति । इदानीं घट इति प्रतीत्या कालस्यापि चाक्षुषत्वमिति धारवाहिकबुद्धौ तत्तक्षणविषयकतयाऽगृहीतग्राहित्वेन प्रामाण्यम् कालस्याचाक्षुषत्वे च मानसं कालभानमिति तदाह–उपनीतेति मानसज्ञानविषयेत्यर्थः ।

( २ ) ज्ञानानीति । वृत्तिरूपज्ञानपरमिदम् एकया वृत्त्या एकाज्ञाननाशेऽपि अज्ञानान्तरस्य सत्त्वेन तदादाय घटावच्छिन्नचैतन्यस्याज्ञातत्वसम्भव इति भावः ।

( ३ ) मननादीनामिति । श्रवणेन ज्ञाततया अज्ञातार्थनिश्चयत्वाभावात् प्रामाण्यं न स्यादिति भावः ।

( ४ ) अमीषामिति । मननादीनामित्यर्थः ।

( ५ ) आवश्यकत्वादिति । मननादेरिति शेषः ।

किं च भेदविषयकत्वं प्रमात्वमन्यत्रौपाधिक तत्त्वमित्येव किं न स्यात् ।

ब्रह्मज्ञानं परमपुमर्थहेतुरिति चेद्भेदज्ञानस्यापि तथात्वस्य प्रतिपादितत्वात् ।

यदप्यज्ञातार्थनिश्चयत्वमनुगतमिति, तदपि न यस्य कस्यचिदज्ञातत्वस्य (१)सर्वसाधारणत्वात् । तत्पुरुषेणाज्ञातत्वस्यापि तथात्वात् तत्पुरुषेणाज्ञातार्थनिश्चयत्वमप्यन्यदीयस्मृतावस्ति(२), तत्पुरुषीयाज्ञातार्थस्य तत्पुरुषीयनिश्चयत्वमपि अतीततत्पुरुषीयस्मृतावस्ति ।

तत्कालीनतत्पुरुषीयाज्ञातार्थस्य तत्कालीनतत्पुरुषीयनिश्चयत्वं तदिति चेत् साधीयोऽनुगतलक्षणमुक्तं महाप्राज्ञेन ।

लक्ष्यस्याप्यननुगमाल्लक्षणाननुगमो न दोषायेति चेत् कालादिगर्भतद्वति तत्प्रकारकत्वमपि तथैवास्तु(३) ।

यदि च प्रमात्वमनुगतं प्रतीयते अनुमिनोमीतिवत् प्रामिणोमीत्यनुव्यवसायोऽपि प्रामाणिकस्तदा प्रमात्वमखण्डोपाधिरूपं गीर्वा-

---

(१) सर्वसाधारणत्वादिति । अनुभवस्मृतिसाधारणत्वादित्यर्थः ।

(२) अस्तीति । तथाचातिव्याप्तिरित्यर्थः ।

(३) अस्त्विति । तथाच उत्पत्तिकालीनघटो गन्धवान् इत्यादौ नातिव्याप्तिः प्रमात्वलक्षणस्य । एवं च तत्कालीनतद्देशीयतद्वति तत्प्रकारकत्वं प्रमात्वं बोध्यम् तथा च मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादावपि नाव्याप्तिरिति तत्त्वम् ।

णगुरोरपि दुर्वारं तस्मात्—

उपपादयितुं स्वेन मतेन शकनीययोः ।
अनिर्वक्तव्यतावादपादसेवागतिः कुतः ॥

किंच धारावाहिकबुद्धयव्याप्तिः, न च क्षणविषयत्वेनागृहीतग्राहित्वं सर्वत्र क्षणभाने मानाभावात् यदि घटोऽयमित्यादौ सर्वत्र क्षणो भासते भासेतैव तदेदं रजतमित्यत्रापि भ्रमे तथा च तत्रातिव्याप्तिः ।

किं च भ्रमविषयस्य भ्रमकालीनत्वात् यथा नाज्ञातत्वं तथा क्षणस्यापि(१) ।

किंच क्षणांशेऽगृहीतग्राहित्वात् क्षणांशे प्रामाण्यं स्यान्न तु घटाद्यंशे अन्यथा भूतलं घटवद् न वेत्यादौ घटांशेऽपि प्रामाण्यं स्यात् ।

न च धारावाहिकज्ञानानामप्रामाण्यमिष्टमिति वाच्यम्, उपपत्तेः ( अभावात् ) । साक्षात्कारे जाते पुनः प्रमाणप्रसराभाव इष्ट एव, इत्थंच भेदश्रुतीनां लोकप्रतीतार्थप्रत्यायकत्वादप्रामाण्यमिति वदन्ति ।

## अनिर्वचनीयतावादनिराकरणम् ।

तदपि न सकललोकसिद्धप्रमाभ्रमव्यवहारस्य दूषणेशून्यतापत्तेः कथं वा मिथ्यापदार्थान् साधयन्नज्ञानं च व्यवस्थापयन् वैतण्डिकमात्मानं ब्रुवन्न (२)लज्जसे ।

---

( १ ) क्षणस्यापीति । ज्ञानकालीनत्वान्नाज्ञातत्वमिति भावः ।

( २ ) लज्जसे इति । स्वपक्षस्थापनाहीनपरपक्षखण्डनस्यैव वितण्डात्वादिति भावः ।

किं चाऽनिर्वचनीयत्वेन कश्चिदखण्डो धर्म उच्यते, निर्वचनानर्हो वा आद्ये(१) प्रमात्वस्याखण्डोपाधित्वे क्षतेरभावः, द्वितीये यस्य कस्यचित् सर्वस्य(२) वा नाद्यः केनचिदनिर्वचनीयत्वेऽप्यन्येन निर्वक्तुं शक्यत्वात् ।

भेदे प्रमाविषयत्वं वदता (३)त्वया प्रमात्वानिर्वचनात् पराजयस्तवेति चेद् , भेददूषणे प्रमाविषयत्वं वदता त्वया प्रमात्वाऽनिर्वचनात् तव पराजय इत्येव किन्न स्यात् ।

दूषणमपि प्रमाविषयत्वादिना अनिर्वचनीयमेवेति चेत् केनानिर्वचनीयं न मया, तन्निर्वचनानुपयोगात् । त्वयाऽनिर्वचने तु तवैव पराजयात् । न द्वितीयः सर्वानिर्वचनीयतायाः ज्ञातुमशक्यत्वात् ।

न वा नित्याविनाशिनिरुपाधिवस्तुविषयकत्वं (४)तत् संभवति,

---

( १ ) आद्य इति । अनिर्वचनीयत्वं यद्यखण्डं तदा प्रमात्वस्याखण्डापाधित्वे को दोष इति भावः ।

( २ ) सर्वस्य वेति । निर्वचनानर्ह इति शेषः ।

( ३ ) त्वया–तार्किकेण । त्वया-वेदान्तिना । मया-तार्किकेण । त्वया-वेदान्तिना । इति क्रमेणार्थः ।

( ४ ) तदिति । 'तात्त्विकप्रमात्वमित्यर्थः । तादृशवस्तुभिन्नो घटः इति ज्ञाने भेदप्रतियोगितया नित्याविनाशिनिरुपाधिवस्तुनो भासमानतया अस्यापि ज्ञानस्य तात्त्विकप्रमात्वापत्तिः । एवं 'तादृशवस्तुज्ञानवान् भ्रान्तः' इति बौद्धानां ज्ञानस्यापि तत्त्वापत्तिः ज्ञानविशेषणतया तादृशवस्तुनो भानेन निरुक्तज्ञानस्य तादृशवस्तुविषयकत्वादिति भावः ।

१३

'तादृशवस्तुभिन्नो घट' इत्यादौ, 'तादृशवस्तुज्ञानवान् भ्रान्त' इति बौद्धानां ज्ञाने चातिव्याप्तेः ।

(१)नापि तादृशवस्तुविशेष्यकत्वं तथा, चिन्मात्रविषयकज्ञाने प्रकारत्वाद्यभावात् ।

(२)नापि तादृशवस्तुमात्रविषयकत्वं तत्, अहं ब्रह्मास्मीति बुद्धेरप्रमात्वापत्तेः न हि तत्र ब्रह्ममात्रं विषयः अभेदादेरपि भानात्, अन्यथा य एवं वेदाहं ब्रह्मास्मीति श्रुतिर्न वदेत् य एवं वेद ब्रह्मेतीति(३) वदेत्, अहंज्ञाने त्वन्मतेऽहंकारविषयताया अभेदभाने भेद विवाव्यप्रामाण्यस्य ? सकललोकसिद्धत्वात् अन्यथागृहीतग्राहि प्रामाण्यमव्याप्त्याद्यापादने त्विष्टापत्तिरित्यपि स्यात् । एवं वेदार्थस्य द्वितीयादिबोधेऽप्यव्याप्तिः अध्यापकस्य ज्ञानम(४)प्रमाणमध्येतुः प्रमाणमित्यनुन्मत्तः कथं परिभाषामात्रं श्रद्दध्यात् ।

---

(१) नापीति । तथा च पूर्वोक्तज्ञानद्वये तादृशवस्तुनो विशेषणतया भानेऽपि न विशेष्यतया भानमिति नाव्याप्तिरिति भावः । चिन्मात्रविषयकज्ञान इति । तत्त्वमस्यादिवाक्यजन्य इत्यर्थः ।

(२) नापीति । तादृशवस्तुभिन्नो घट इति ज्ञाने भेदस्य घटस्य चाधिकस्य भानान्न तत्त्वमिति भावः ।

(३) ब्रह्मेति वदेदिति । वेदान्तिना 'अहं ब्रह्मास्मि' 'तत्त्वमसी' त्यादिवाक्यैरखण्डार्थबोधस्याभ्युपगमेन जीवब्रह्मणोरभेदभानाभावेन 'ब्रह्म' इत्येव बोधात् ब्रह्मेत्येव वदेत् न त्वहं ब्रह्मास्मीति वदेदिति भावः ।

(४) अप्रमाणमिति । ज्ञातार्थविषयकत्वादितिशेषः । प्रमाणमिति । अज्ञातार्थविषयकत्वादिति शेषः ।

किंच शाब्दबोधेऽपि क्षणो भासताम्,

पदाभावान्नैवमिति चेन्न वाक्यार्थस्येवा(१)काङ्क्षाज्ञानस्यैव तद्भासकत्वसम्भवात् ।

न (२)वा तूलाज्ञानेन समाधानं युक्तं ज्ञानाज्ञानयोर्युगपद्विरोधात् । (३)अविरोधे वा भेदश्रुतीनामपि प्रमात्वमागतमेव । एवं मननादेः प्रमात्वं न स्याद्यदि श्रवणेनाज्ञानं नापनीयते तदा ज्ञानमपि तन्न स्यात् ज्ञानत्वमज्ञानविरोधित्वघटितमिति त्वयैवोक्तेः । एवं (४)साक्षात्कारे जातेऽपि प्रमाणप्रसरो जीवन्मुक्तिशास्त्रादेवावसीयते । व्यासादेरज्ञानं नापगतमिति त्वयैव वक्तुं शक्यते प्रामाणप्रसरस्तु शास्त्रवशादतिस्पष्ट एव । एवमीश्वरज्ञानस्याप्रमात्वापत्तिश्च वज्रलेपायिता ।

किंच अर्थतथात्वनिर्णयार्थं हि प्रामाण्यमनुस्त्रियते । यदि तु

---

( १ ) अकाङ्क्षाज्ञानस्यैवेति । यथाऽऽकाङ्क्षाज्ञानं वाक्यार्थभूतस्य अपदार्थस्याभेदस्य भासकं तथाऽपदार्थस्यापि क्षणस्य भासकमस्त्विति भावः ।

( २ ) यावन्ति ज्ञानानि तावन्त्यज्ञानानि इत्युक्तं समाधानं दूषयति–नवेति (

( ३ ) अविरोधे वेति । ज्ञानाज्ञानयोरविरोधवद् भेदाभेदयोरप्यविरोध एव स्यादिति सत्यपि भेदेऽभेदस्यापि सत्त्वेनाभेदश्रुतीनामपि प्रमात्त्वमेवेति भावः ।

( ४ ) साक्षात्कारे जाते प्रमाणप्रसराभाव इष्ट एवेति यदुक्तं तद्दूषयति एवमिति ।

अबाधितेऽप्यर्थे (१)किंचिज्ज्ञानं प्रमा किञ्चिन्नेति स्यात्तदा कुतस्तदनुसरणं न वा उत्तरज्ञानात् प्रवर्त्तेत । बहुधा निर्णीते हि करतलामलकादौ शीघ्रतरा प्रवृत्तिर्न तु ज्ञातार्थनिश्चयत्वमनुसंदधानो निवर्त्ततेऽप्रमात्वं वा व्यवहरति(२) ।

अत एवैकेन प्रमाणेन निर्णीतेऽपि प्रमाणान्तरेण निर्णयाय प्रयतन्ते प्रामाणिकाः । अत एव—

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्य्यं धर्मशुद्धिमभीप्सता ॥

इत्युक्तं मनुना । मीमांसकानां यदगृहीतग्राहित्वं प्रामाण्यं तत् तथैव विधिरत्यन्तमप्राप्तावित्युक्तत्वात् प्राप्ते विधानासम्भवात् । शेषं दम्पती भुञ्जीयतामित्यादौ न भोजनांशे विधिः प्राप्तत्वात् । वेदान्तानां वस्तुपराणां न तथात्वं तस्मात् 'प्रांशुलभ्ये फले मोहादुद्बाहुरिवामनः, इति प्रत्यक्षादिसम्वादाद्बलीयस्त्वं भेदश्रुतीनाम् ।

## निर्गुणवाक्यानां बलीयस्त्वखण्डनम् ।

यत्तु निर्गुणवाक्यानां (३)गुणापेक्षतया परत्वाद्बलीयस्त्वमिव भेदश्रुत्यपेक्षयाऽभेदश्रुतीनां बलवत्त्वमिति ।

तन्न तथासति ब्रह्मणोऽसत्त्वापत्तेः । असद्वा इदमग्र आसीत्ततो

(१) किंचिदिति । अगृहीतग्राहि प्रमा, गृहीतग्राहि चाप्रमेत्यर्थः ।

(२) व्यवहरतीति । अतो नाज्ञातार्थनिश्चयत्वं प्रमात्वमित्यर्थः ।

(३) गुणापेक्षयेति । अभावज्ञाने प्रतियोगिज्ञानस्य करणत्वादिति भावः ।

वै सदजायत तदात्मानं स्वयमकुरुत तस्मात् स्वकृतमुच्यत इति श्रुतेः सदेव सोम्येदमग्र आसीत् असन्नेव स भवति असद् ब्रह्मेति वेद चेदित्यादिश्रुतिभ्यो बलवत्त्वप्रसङ्गात् ।

## अवच्छेदवादखण्डनम् ।

यत्तु अज्ञानावच्छिन्नो जीवः सच भिन्नो (१) विशेषणभेदादिति । तन्न अज्ञानस्यैकस्यैवाभ्यु(२)पगमात् । नानाऽज्ञानपक्षे तु एकैक(३)स्यासंख्याऽज्ञानवत्त्वादसंख्यत्वापत्तिः नवाऽज्ञानस्यामूर्त्ततया प्रदेशविशेषशून्यस्य धर्मिभेदकत्वं सम्भवति, तथा(४) सत्येकस्यैव ज्ञानाज्ञानधर्माधर्मादिभिर्भेदप्रसक्तेः ।

## प्रतिबिम्बवादखण्डनम् ।

यदपि अज्ञानप्रतिबिम्बो जीवः बिम्बस्त्वीश्वर इति तन्न अज्ञाने प्रतिबिम्बनाऽसम्भवात् अज्ञाननाशे जीवस्यापि नाशा(५)पत्तेश्च जीवस्य जडत्वापत्तेः प्रतिबिम्बस्याचेतनत्वात् नवा मोक्षार्थं प्रवृत्तिः

---

(१) विशेषणभेदादिति । विशेषणीभूतानामज्ञानानां भेदादित्यर्थः ।

(२) अभ्युपगमादिति । तथा च जीवनानात्वं न स्यादिति भावः ।

(३) एकैकस्येति । एकैकजीवाधिष्ठानज्ञानानामसंख्यतया असंख्याऽज्ञानावच्छिन्नस्यैकस्य जीवस्यासंख्यत्वं स्यादिति भावः ।

(४) तथासतीति । अमूर्तस्यापि भेदकत्वाङ्गीकारे इत्यर्थः ।

(५) नाशापत्तेश्चेति । प्रतिबिम्बाश्रयस्याज्ञानस्य नाशे प्रतिबिम्बः न तिष्ठेदिति भावः ।

सम्भवति स्वनाशार्थं प्रवृत्त्ययोगादित्युक्तत्वात् ।

प्रतिबिम्बस्य मिथ्यात्वात् कथं वा तस्य मोक्षः स्यात् ।

उपाधिनाशे बिम्बैक्यमेव तस्य मोक्ष इति चेत् जीवः कालत्रयेऽपि नास्ति मिथ्याभूतघटादिसमशील इति विना भवन्तं विना-माध्यमिकं कस्तथा ब्रूयात् । कथं वा तत्त्वमसि इत्यादिनाऽभेद उपदिश्यते नित्यानित्ययोरभेदासम्भवात् ।

अत एव इदं सर्वं यदयमात्मेति वाक्ये प्रपञ्चबाधे श्रुतेस्तात्पर्यमित्युक्तम् ।

यदि तु प्रतिबिम्बस्थले ग्रीवास्थमेव मुखं दर्पणगतत्वेन गृह्यत इत्युच्यते तदाऽन्यथा(१)ख्यात्यापत्तिः ।

मुखे दर्पणगतत्वमुत्पद्यते इति चेन्न विनिगमकाभावात् न वा प्रकृते सम्भवति ब्रह्मणो भ्रमाभावात् ।

नापि जीवस्य तस्य प्रतिबिम्बरूपत्वात् तस्य तज्ज्ञानासम्भवात् प्रलये ज्ञानाभावेन जीवाभावप्रसङ्गाच्च ।

## अभेदश्रुतीनां भावनापरत्वम् ।

अभेदश्रुतयस्तु क्वचिद्भावनापराः य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति सर्वाभेदभावनया विभक्तत्वग्रहाभावात् सर्वं भवतीति ।

अत एव यत्र त्वस्य सर्वमात्मैवाभूदिति न तु सर्वाभावा-

(१) अन्यथाख्यात्यापत्तिरिति । तथा च तार्किकमतप्रवेश इति भावः ।

दात्मैवाविशिष्यत इत्यर्थः, सर्वं भवतीत्यादौ लक्षणापत्तेः ।

अत एव मोक्षधर्मे शुकाभिपतने—

शुकः सर्वगतो भूत्वा सर्वात्मा सर्वतो मुखः ।

प्रत्यभाषत धर्मात्मा भोः शब्देनानुनादयन् ॥

इदं सर्वं यदयमात्मेत्यादीनामप्ययेषैव गतिः ।

अत एव 'यद्वै(१) तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते ऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येदि'त्यविभाग उक्तः । 'विमु(२)क्तश्च-

---

(१) तत्तत्र सुषुप्तावात्मा नवै नैव पश्यतीति यज्जनीषे तन्न तथा यतस्तत्र स्वरूपचैतन्येन सर्वसाक्षित्वात् पश्यन्वै एव सन् द्रष्टव्यं पदार्थजातं न पश्यति इत्यपि सम्भवति इति स्वरूपदर्शनं विशेषादर्शनं च प्रतिज्ञायते तत्र प्रथमप्रतिज्ञायां हेतुमाह द्रष्टुर्या सर्वसाक्षिभूता दृष्टिः तस्या हि यस्माद्विपरिलोपो विनाशो न विद्यते अग्न्युष्णत्ववत् अत्रापि हेतुरविनाशित्वात् विनाशहेतुपरिणामहीनत्वादित्यर्थः । विशेषज्ञानाभावरूपद्वितीयप्रतिज्ञायां हेतुमाह—नत्विति । तत्तत्र सुषुप्तौ तत् आत्मस्वरूपाद् द्वितीयं प्रमातृस्वरूपं समासान्तः करण लक्षणं आत्मस्वरूपादन्यच्च चक्षुरादिलक्षणं प्रमेयं न त्वस्ति यत्प्रमेयं प्रमाता प्रमाणेन पश्येदित्यर्थः ।

(२) ॐ पुरमेकादशद्वारमजस्यावक्रचेतसः । अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते । एतद्वै तत् ।

अजस्य जन्मादिरहितस्य अवक्रचेतसः अकुटिलं सर्वं विषयकं चेतो ज्ञानं यस्य ब्रह्मणः पुरं गृहतुल्यमिदं शरीरम् एकादशद्वारं द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके एकं मुखं ब्रह्मरन्ध्रं नाभ्या सह-त्रीणि अवाञ्चि इत्येकादशद्वाराणि यस्य तदेकादशद्वारं तं गृहस्वा-

विमुच्यते' तस्य कागतिरिति चेदुक्तमेव, विमुक्तः कश्चिद्, विमुच्यते च कश्चिदित्यर्थात् ।

वस्तुतो गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवतीत्यनेनैकार्थत्वात् ।

एवं—

सर्वभूतान्यभेदेन ददृशे स तदात्मना ।
तथा ब्रह्म ततो मुक्तिमवाप परमां द्विज ॥
तथा त्वमपि धर्मज्ञ ? ज्ञात्वात्मरिपुबान्धवः ।
भव सर्वगतं ज्ञात्वा आत्मानमवनीपते ॥

एतत्समस्तं यदिहास्ति किंचित्तदच्युतो नास्त्यपरं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥

अत्र सर्वगतत्वज्ञानादभेदभावनमुक्तम् । फलं रागद्वेषादिपरित्यागात् तुल्यात्मरिपुबान्धव इति ।

अत एव—

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥

इत्युक्तम् । उक्ताभेदस्यान्तर्यामित्वादात्मस्वरूपं भेदमोहस्तत्सम्बन्धाज्ञानाद्विभक्तत्वम् ।

अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजाताः ।

---

मिनमात्मानमनुष्ठाय अभेदेन ज्ञात्वा विद्वान् न शोचति विमुक्तश्च नित्यमुक्तस्वरूपोऽपि विमुच्यते बन्धरहितो भवति तत् नचिकेतसा पृष्टं एतद्वै इत्यर्थः ।

ईदृङ् मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्व(१)गदा भवन्ति ॥

एतादृशं ज्ञानं भ्रम इत्यपि नाशङ्कनीयम् । उक्ताभेदस्य सर्वनिर्वाहकत्वात् 'सर्वभूतस्थितं यो मां जपत्येकत्वमास्थितम्' इति भगवतैवोक्तत्वात् अस्तु वा भ्रमत्वमभेदभावनस्य किं तावता ।

## मिथ्याभूतात्माभेदभावनस्य मोक्षसाधकत्वम् ।

भ्रमात्कथं वस्तुसिद्धिरिति चेत् स्वप्नज्ञानस्य राज्यादिप्रापकत्ववत् गरुडाभेदभावनस्य विषनाशकत्ववत् पाषाणप्रतिमादिषु देवबुद्धेः पापनाशकत्ववच्च सम्भवात् ।

एवमेव सर्वाण्येत्र भेदवचनानि यथायथं समञ्जसनीयानि (२)'मनसैवानुद्रष्टव्यं' 'नेह नानास्ति किंचन' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'एकधैवानुद्रष्टव्यमि'ति तु स्पष्टं भावनमुपदिशति ।

ईश्वरस्य नानात्वनिषेधकमिदमिति भास्कराचार्यः ।

ब्रह्मणि प्रपञ्चसमवायनिषेधकमित्यपरे ।

---

(१) द्वन्द्वगदा इति । शीतोष्णसुखदुःखादय इत्यर्थः ।

(२) 'मनसैवेदमाप्तव्यं नेह नानास्ति किंचन । मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति' इति श्रुतिः । मनसा शास्त्राचार्यसंस्कृतेनैकाग्रेण इदं ब्रह्माप्तव्यं वेदितव्यम् इह ब्रह्मणि किंच अल्पमपि नाना नानात्वं भेदो नास्तीत्यर्थः यश्च मूढ इह ब्रह्मणि नानेव भेदमिव पश्यति स पुरुषः मृत्योर्मृत्युं जन्ममरणादिकं गच्छति प्राप्नोति इत्यर्थः ।

यश्चायं पुरुषे यश्चासावादित्ये स य एवं वेदास्माल्लोकात्प्रेतीत्यपि भावनमेव वदतीति ।

योऽविकल्पमिदमर्थमण्डलं पश्यतीश ! निखिलं भवद्वपुः ।

(१)आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतोभयम् ॥

इत्यस्यापि भावने तात्पर्यमिति सकलप्रमाणसिद्धः परमपुमर्थसाधनो भेदो गीर्वाणगुरूणामपि दुर्वार इति संक्षेपः ।

इति महामहोपाध्याय श्रीयुतविद्यानिवासभट्टाचार्यपुत्रेण श्रीविश्वनाथसिद्धान्तपञ्चानभट्टाचार्येण कृतायां भेदसिद्धौ प्रथमः परिच्छेदः ।

---

(१) आत्मपक्षेति । सर्वमात्मैवेति भावनया भाविते जगति नित्यसुखिनः शत्र्वादिभावनाऽभावे द्वेषमलरहितस्यास्य कस्माद्भयं भवेदित्यर्थः । तथा च श्रुतिः—

'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते' ॥ इति ।

राजकीयमहाविद्यालयाध्यक्षा महोदयाः ।
प्राचां तथा प्रतीचां च दर्शनेषु सुपण्डिताः ॥
कविराजकुलोद्भूताः शैवागमविदाम्बराः ।
श्रीगोपीनाथशर्माणो जयन्ति कृन्तिनां वराः ॥
आज्ञां तदीयामालम्ब्य सूर्यनारायणः सुधीः ।
भेदसिद्धिपरिष्कारमकार्षीद्विदुषां मुदे ॥
यः शब्दशास्त्रशतपत्रसहस्ररस्मि-
रस्मत्पिता सकलतन्त्रविदां वरिष्ठः ।
श्रीरामभद्रपदपङ्कजलुब्धचेता
रामेश्वरः स सुकृती भवतात्सुतुष्टः ॥

श्रीमन्माधवदेशिकादपि परां विद्यां तु वैयासिकीं
मीमांसामतिमांसलां गुरुवराद्रामानुजाचार्यादपि ।
शाब्दं चन्द्रधराज्जगत्सु विदिताच्छ्रीदत्तविद्वद्वरा-
त्तर्कं सम्यगधीत्य सोऽस्मि सुकृती श्रीसूर्यनारायणः ॥

इति स्मार्तसंप्रदायाचार्य-श्रीमद्रामभद्रचरणारविन्दस्मरणपरायण-व्याकरण न्याय-
वेदान्तसाहित्यज्यौतिषपुराणादिप्रवचनप्रख्यातपाण्डित्य पण्डितप्रवर श्रीरा-
मेश्वरशुक्लतनुजन्मना वाराणसेयराजकीयसंस्कृतमहाविद्यालयनव्यप्रा-
चीनन्यायशास्त्राध्यापकेन मीमांसकशिरोमणि साहित्याचार्य-
तर्कपञ्चाननादिविरुदालङ्कृतेन श्रीमदयोध्याप्रान्तजनिम-
ता सरयूपारीणवंशावतंसेन न्यायव्याकरणा-
चार्येण सूर्यनारायणशर्मशुक्लेन प्रणी-
ते भेदसिद्धिपरिष्कारे प्रथमः परि-
च्छेदः पूर्णतामभजत् ॥



# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| मुत्पत्ति | मुत्पत्ति | १ | ४ |
| करणत्वात् | कारणत्वात् | ,, | १० |
| ,, | ,, | ,, | १२ |
| ह्मणः | ब्रह्मणः | ३ | २३ |
| करणत्वं | कारणत्वं | ४ | २ |
| निषेधेनव | निषेधेनैव | ५ | १७ |
| संयोगाभावेन | संयोगानामभावेन | ७ | १६ |
| रहि | रहित | ११ | १७ |
| भेदाऽभिन्ने | भेदोऽभिन्ने | १३ | ११ |
| भेदस्वरूपे | भेदस्वरूपे पूर्वपक्षः | १५ | ७ |
| त्तदृश | त्तादृश | १६ | ११ |
| घटनास्ति | घटोनास्ति | १९ | २० |
| तदवछिन्न | तदवच्छिन्न | २० | ६ |
| एव | एवं | ,, | १४ |
| निरचष्टे | निराचष्टे | ,, | १६ |
| तीर्थिकै | तैर्थिकै | २३ | १० |
| पदाभेदस्य च | पदाभेदस्य | २४ | १४ |

| अशुद्धम् | शुद्धम् | पृ० | पं |
| --- | --- | --- | --- |
| नित्योऽनित्यानां | नित्यो नित्यानां | २८ | ८ |
| भेदवत्वं | भेदवत्त्वं | ३० | ६ |
| देवाक्तं | देवोक्तं | ,, | १६ |
| सिद्धता | सिद्धतो | ,, | १७ |
| वोध्यते | बोध्यते | ,, | २३ |
| विमलम्भकत्वं | विप्रलम्भकत्वम्, | ३१ | ३ |
| इश्वर | ईश्वर | ३२ | १६ |
| ऐतदात्म्यमित्या- | ऐतदात्म्यमिदमित्या | ३३ | १२ |
| महाभष्योक्तं | महाभाष्योक्तं | ३४ | २१ |
| तीर्थकै | तैर्थिकै | ३६ | ८ |
| ,, | ,, | ,, | १७ |
| वृहस्पति | बृहस्पति | ४० | १ |
| ,, | ,, | ,, | १८ |
| ब्रह्मणोरक्य | ब्रह्मणोरैक्य | ४२ | १६ |
| प्रणप्तृन् | प्रनप्तृन् | ४३ | ६ |
| न चतद्युज्यते | न चैतद्युज्यते | ४४ | ६ |
| संयोगाङ्गीकृतः | संयोगोऽङ्गीकृतः | ,, | २५ |
| कारणानि | कारणानि निखिलानि | ४५ | १ |
| साम्य | सोम्य | ४६ | १० |
| श्रतौ | श्रुतौ | ४६ | २२ |
| ग्रदके | ग्रुदके | ४८ | १३ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| सुग्रोवरैक्य | सुग्रीवयोरैक्य | ५१ | २० |
| नित्यत्वा | नित्यत्वा | ५६ | ९ |
| ब्यवहार | व्यवहार | ५६ | २१ |
| इश्वरो | ईश्वरो | ५८ | ४ |
| तद्याग्य | तद्योग्य | ,, | १६ |
| इन्द्रिसय | इन्द्रियस | ५९ | १५ |
| चतन्य | चैतन्य | ६० | २० |
| हेता | हेतो | ,, | २३ |
| स्बर्गादे | स्वर्गादे | ६२ | २० |
| पपत्तश्च | पपत्तेश्च | ,, | २२ |
| जावस्य | जीवस्य | ६३ | १५ |
| निकृष्य | निष्कृष्य | ६४ | १ |
| निकृष्टा | निष्कृष्टा | ,, | २ |
| बाचो | वाचो | ,, | ४ |
| सकलौकिवैदिक | सकललौकिकवैदिक | ६४ | २० |
| संभबा | संभवा | ६९ | ४ |
| संमाष्टी | संमार्ष्टी | ७१ | २० |
| स्योद्दश्य | स्योद्देश्य | ७२ | २१ |
| तत्रकत्व | तत्रैकत्व | ,, | २२ |
| च्छेदकतयाभय | च्छेदकतयोभय | ७६ | २३ |
| सुखित्वादु:खित्व | सुखित्वदु:खित्व | ७७ | ११ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| द्वैतिमि | द्वैतिभिः | ७८ | ४ |
| स्वावृत्तीति | स्वावृत्ती | ७६ | १६ |
| स्तस्य(१) रूषरुत्यया-मतत्वात् | तस्य पद्मेतरसमतया ऽमतत्वात् | ८० | १५ |
| प्रासद्धि | प्रसिद्धि | ८० | १७ |
| अतत्वा | अमतत्वा | ८० | २० |
| प्रयोजक | प्रयोजक | ८३ | १४ |
| धीर्ही | श्रद्धाऽश्रद्धा धृतिरधृतिर्हीर्धी | ८४ | २० |
| ताछील्या | ताच्छील्या | ८७ | १३ |
| करात्येष | करोत्येष | ८६ | ११ |
| काटिश | कोटिश | ,, | ,, |
| ज्ञातॄनु | ज्ञानु | ८८ | ७ |
| इत्याह | इत्याहुः | ८८ | ८ |
| तत्तत्त्तग | तत्तत्त्तग | ६४ | १५ |
| विवाव्यप्रामाण्यस्य | विरोधेनाप्रामाण्यस्य | ६८ | ६ |
| जीवाधिष्ठान | जीवष्ठा | १०१ | १८ |

## भूमिकायाम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| अद्वैताज्ञानं | अद्वैतज्ञानं | १ | ११ |
| र्योग | र्योंग | २ | २ |
| आत्मकम | आत्मकाम | ,, | २२ |

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A.
Rs. 1-12

No. 2—The Advaita Chintāmaṇi, by Rañgoji Bhaṭṭa,
Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya.
Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya.
Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra, a Commentray on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-2

No. 6—(Part I)-The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt.
Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-The Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A.
Rs. 1-8

No 7—( Part II ) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya.
Rs. 0-10

No. 9—(Part I)–The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0–15

No. 10–(Part I)–The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 1–2

No. 10–(Part II)—Do. Do. Rs. 2–12

No. 11–The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya.
Rs. 0–9

No. 12–The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya.
Rs. 1–2

No. 13–The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0–14

No. 14–The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya.
Rs. 0–14

No. 15–(Part I)–The Tripurārahasya. ( Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A
Rs. 0–14

No. 15–( Part–II )—Do. Do. Rs. 2–4

No. 15–( Part III )—Do. Do. Rs. 2–0

No. 15–( Part IV )—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16–The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya.
Rs. 1–2

No. 17–The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt.
Rs. 0–14

No. 18-(Part I)-The Gorakṣa Siddhānta Saṅgraha.

Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0-14

No. 19-( Part. I )-The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.

Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2-4

No. 19-( Part.II ) Ditto Ditto Rs. 2-12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20-The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.

Edited with Introduction etc. by Pandit Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0-12

No. 21-( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Pañchānana Bhaṭṭāchārya,

Edited with Introduction etc. by Mangal Deva S'āstrī M. A., D. Phil. ( Oxon ), Librarian, Govt Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1-4

No. 21-( Part-II ) Ditto Ditto Rs. 2-0

No. 22-The Dharmānubandhi S'lokachaturdaśī by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.

Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1-0

No. 23-The Navarātrapradīpa by Nanda Pandit Dharmādhikārī.

Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by Pândit Gopinath Kaviraj, M. A., Principal, Government Sanskrīt College, Benares. Rs. 2-0

No. 24-The S'rī Rāmatāpinīyopaniṣad with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.

Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post-Āchārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 3-12

No. 25-The Sāpiṇḍyakalpalatikā by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4.

No. 26-The Mṛgāṅkalekhā Nāṭikā by Viśvanātha Deva Kavi.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sahityācharya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27--The Vidvachcharita Pañchakam By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Sarasvati Bhavana, Library, Benares. With an Introduction by Gopināth Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs 2-0

No. 28-The Vrata Kos'a by Jagannātha S'āstri Hosiṅga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by S'rī Gopinātha Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs 4-0

No. 29-The Vṛitti dīpikā By Mauni S'rī Kṛṣna Bhatta.
Edited with Introduction etc. by Pt.Gangadhara S'astri Bhāradvāja, Professor, Govt. Sanskrit College, Benares. Rs. 1-2

No. 30--The Padārtha Maṇḍanam By S'rī Venīdatta.
Edited with Introduction etc. by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0-14

No. 31 ( Part I)-The Tantraratna by Pârtha Sārathi Mis'ra.
Edited by M. M. Dr. Ganganatha Jha, M. A., D. Litt, Vice-Chancellor, Allahabad University, Allahabad. Rs. 1-14

No. 31-( Part II ) Ditto. Ditto.

No. 32-The Tattvasāra by Rākhāldasa Nyāyaratna.
Edited with Introduction etc. by Harihara S'astri, Benares Hindu University. Rs. 1-0.

No 33-( Part I ) The Nyaya Kaustubha by Mahadeva Puntamkar
Edited with Introduction etc. by Umes'a Miśra, M. A. Allahabad University, Allahabad. Rs. 3-4

No. 34-( Part I ) The Advaita Vidyātilakam by S'rī Samarapuṅgava Dīkṣita. With a Commentary by S'rī Dharmayya Dīkṣita. Edited with Introduction, etc, by Ganapati Lal Jha M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares.

No. 35-The Dharma Vijaya Nāṭaka by Bhūdeva S'ukla. Rs. 1-4
Edited with Introduction etc, by Pandit Nārāyaṇa S'āstri Khiste, Asst. Librarian, Govt. Sanskrit Library, Benares.

No. 36-The Ananda Kanda Champu, by Mitra Misra. Rs. 1-4
Edited, with a Foreword by Gopinath Kaviraj, M. A., by Nanda Kishore Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs. 3-8

No. 37-The Upanidāna Sūtra.
Edited with Introduction by Dr. Mangaldeva S'āstri. Rs. 1-0

No. 38-The Kiranāvali prakās'a didhiti ( Guṇa ), by Raghunāth S'iromani.
Edited by Pandit Badrināth Sāstri, M. A., Lucknow University Rs. 1-12

No. 39-The Rama Vijaya Mahākavya, by Rupanātha.
Edited by Pt. Ganapatilal Jha, M A. Rs. 2-0

No. 40-( Part I ) Kalatattva Vivechana by Raghunath Bhatta.
Edited with a foreword by Gopinātha Kaviraja M. A. by Nanda Kishore S'arma Sahityacharya, Resarch Scholar Sanskrit College, Benares. Rs. 4-0

No. 41-( Part I ) Siddhānta Sārvabhauma by S'ri Muniśvara.
Edited with Introduction etc. by Jyautiṣâchārya Pandit Murlidhara Thakkura, Late Sadholal Scholar, Sanskrit College, Benares. Rs 3-0

No. 42-Bheda Siddhi by Vis'vānātha Panchânana Bhaṭṭāchārya
Edited with notes etc., by Nyāya Vyākaranāchārya Pandit Sûrya Nārāyaṇa S'ukla, Professor, Govt. Sanskrit College, Benares.

## THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1) : its Evolution, by Gaṅgānātha Jhā.

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha.

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj.

(j) Nyāya Kusumāñjali (English Translation), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇa S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgānātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭācharya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5.

**Vol. IV—**

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgā-nātha Jha.
(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.
(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Maṅgala Deva S'āstrī.
(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.
(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy
(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj.
(g) Discipline by Consequences, by G. L. Sinha.
(h) History of the origin and expansion of the Aryans. by A. C. Ganguly.
(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5

**Vol. V—**

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.
(b) A Satrap Coin, by Shyamalal Mehr.
(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.
(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.
(e) Formal Training and the Ancient Indian Thought, by G.L. Sinha.
(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.
(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nātha Roy.
(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

**Vol. VI—**

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..
(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.
(c) An Index etc. the Ramayana, by Manmatha nātha Roy.
(d) Studies in Hindu Law by M. M. Gaṅganatha Jha
(e) The Mimaṃsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinātha Kavirāj.
(f) Notes and Queries, by Gopinātha Kavirāj.

Vol. VII.

(a) Bhāmaha and his Kāvyālaṅkāra, by Baṭukanātha S'armā and Baladeva Upādhyāya.

(b) Some variants in the readings of the Vais'eṣika Sūtras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyâya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sītāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayaṇa, by Manmatha Nāth Roy.

(g) An Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the word Parārdha, by Umes'a Mis'ra.

Vol. VIII.

(a) Indian Philosophy, by Taraknath Sanyal.

(b) An Index to the Rāmāyaṇa, by Manmatha Nath Roy.

(c) Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

(d) Hari Svāmi, the commentator of S'atapatha Brāhmana and the date of Skanda Svami the commentator of the Rigveda, by Mangaladeva S'âstri.

(e) Mysticism in Veda, by Gopināth Kaviraj.

(f) The Deva dāsī: a brief history of the Institution, by Manmatha Nātha Roy.

Vol. IX (In progress)

(a) The Life of a Yogin, by Gopinātha Kavirāj.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

( SANSKRIT )

## SARASVATALOKA

Edited by

GOPINATH KAVIRAJ, M. A.

Kirana 1 ( In progress )

(a) Mangalam, etc, by Nārāyaṇa S'āstri Khiste.

(b) Mimansaka mata saṃgraha, by Haranchndra Bhaṭṭācharya.

(c) S'rimad Ācharya Mandana Mis'ra by Chinna Swami S'astri

(d) Bhagavato Buddhasya Charitam Upades'as'cha : by Gopinatha Kaviraj.

Kirana I ( Supplement )

Sanskrita Kavi Parichaya-(Bharavi) by Nanda Kishore Sharma.

Kirana II ( In progress )

(a) S'āradā Prasādanam by Nārâyana S'āstri Khiste.

(b) Chūḍāmani Dars'anam by S'as'adhara Tarkachūḍāmaṇi.

To be had of
The Superintendent
Government Press, U. P.,
Allahabad.

